**स्वभावप्रतिबन्धे हि सत्यर्थोऽर्थं गमयेत् ॥ २० ॥**

स्वभावेन प्रतिबन्धः स्वभावप्रतिबन्धः । ' साधनं कृता ' (पा. २, १, ३२) इति समासः । स्वभावप्रतिबद्धत्वं प्रतिबद्ध-स्वभावत्वमित्यर्थः । कारणे स्वभावे च साध्ये स्वभावेन प्रतिबन्धः कार्यस्वभावयोरविशिष्ट इत्येकेन समासेन द्वयोरपि संग्रहः । हिर्य-स्मादर्थे । यस्मात् स्वभावप्रतिबन्धे सति साधनार्थः साध्यार्थं गमयेत् तस्मात् त्रयाणां गमकत्वं अन्येषामगमकत्वम् ।

कस्मात्पुनः स्वभावप्रतिबन्धे एव सति गम्यगमकभावो नान्यथेत्याह --

**तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात् ॥ २१ ॥**

तदिति स्वभाव उक्तः । तेन स्वभावेनाप्रतिबद्धः ' तदप्रति-बद्धः ' । यो यत्र स्वभावेन न प्रतिबद्धः तस्य तदप्रतिबद्धस्य ' तदव्यभिचारनियमाभावात् ' । तस्य प्रतिबन्धविषयास्याव्यभिचारः तद-व्यभिचारः तस्य नियमः तदव्यभिचारनियमः तस्याभावात् । अय-मर्थः— न हि यो यत्र स्वभावेन न प्रतिबद्धः स तमप्रतिबन्धविषयम-वश्यमेव न व्यभिचरति, इति नास्ति तयोः ' अव्यभिचारनियमः ' अविनाभावनियमः । अव्यभिचारनियमाच्च गम्यगमकभावः । न हि योग्यतया प्रदीपवत् परोक्षार्थप्रतिपत्तिनिमित्तमिष्टं लिङ्गम्, अपि त्व-व्यभिचारित्वेन निश्चितम् । ततः स्वभावप्रतिबन्धे सत्यविनाभाव-निश्चयः । ततो गम्यगमकभावः । तस्मात् स्वभावप्रतिबन्धे सत्यर्थोऽर्थं गमयेत् नान्यथेति स्थितम् ।

ननु च परायत्तस्य प्रतिबन्धोऽपरायत्ते । तदिह साध्यसाध-नयोः कस्य क्व प्रतिबन्ध इत्याह —

[२६] **स च साध्येऽर्थे लिङ्गस्य ॥ २२ ॥**

' स च ' स्वभावप्रतिबन्धो लिङ्गस्य साध्येऽर्थे । लिङ्गं परायत्त-त्वात् प्रतिबद्धम् । साध्यस्त्वर्थोऽपरायत्तत्वात् प्रतिबन्धविषयः न प्रतिबद्ध इत्यर्थः । तत्रायमर्थः - तादात्म्याविशेषेऽपि यत् प्रतिबद्धं तत्

गमकम् । यत् प्रतिबन्धविषयः तत् गम्यम् । यस्य च धर्मस्य यन्नियतः स्वभावः स तत्प्रतिबद्धः, यथा प्रयत्नानन्तरीयकत्वाख्यः अनित्यत्वे । यस्य तु स चान्यश्च स्वभावः स प्रतिबन्धविषयः, न तु प्रतिबद्धः । यथाऽनित्यत्वाख्यः प्रयत्नानन्तरीयकत्वाख्ये । निश्चयापेक्षो हि गम्यगमकभावः । प्रयत्नानन्तरीयकत्वमेव चानित्यस्वभावं निश्चितम् । अतः तदेवानित्यत्वे प्रसिद्धम् । तस्मान्नियतविषयः एव गम्यगमकभावो नान्यथेति ।

कस्मात्पुनः स्वभावप्रतिबन्धो लिङ्गस्य साध्येन इत्याह —

**वस्तुतस्तादात्म्यात्साध्यादर्थादुत्पत्तेश्च ॥ २३ ॥**

वस्तुत इत्यादि । स साध्योऽर्थः 'आत्मा' स्वभावो यस्य तत् तदात्मा तस्य भावः तादात्म्यं तत्स्वभावत्वं तस्मात् हेतोः । यतः साध्यस्वभावं साधनं, तस्मात् तत्तत्र स्वभावप्रतिबद्धमित्यर्थः । यदि साध्यस्वभावं साधनं, साध्यसाधनयोरभेदात् प्रतिज्ञार्थैकदेशो हेतुः स्यादित्याह- वस्तुत इति । परमार्थसता रूपेणाभेदस्तयोः; विकल्पविषयस्तु यत् समारोपितं रूपं तदपेक्षः साध्यसाधनभेदः । निश्चयापेक्ष एव हि गम्यगमकभावः । ततो निश्चयारूढरूपापेक्ष एव तयोर्भेदो युक्तः वास्तवस्तु अभेद इति । न केवलं तादात्म्यादपि तु ततः 'साध्यादर्थादुत्पत्तेः' लिङ्गस्य । तदुत्पत्तेश्च साध्येऽर्थे स्वभावप्रतिबन्धो लिङ्गस्य ।

कस्मात् निमित्तद्वयात् स्वभावप्रतिबन्धो लिङ्गस्य, नान्यस्मादित्याह —

**अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात् ॥ २४ ॥**

स स्वभावोऽस्य सोऽयं तत्स्वभावः, न तत्स्वभावः 'अतत्स्वभावः' । तस्मादुत्पत्तिरस्य सोऽयं तदुत्पत्तिः, न तथा 'अतदुत्पत्तिः' । यो यत्स्वभावो यदुत्पत्तिश्च [२७] न भवति तस्य अतत्स्वभावस्यातदुत्पत्तेश्च । 'तत्र' अतत्स्वभावेऽनुत्पादके च । अ-

प्रतिबद्धः स्वभावोऽस्येति सोऽयं अप्रतिबद्धस्वभावः तस्य भावः अप्रतिबद्धस्वभावत्वं तस्मात् 'अप्रतिबद्धस्वभावत्वात्'। यदि अतत्स्वभावे अनुत्पादके च कश्चित् प्रतिबद्धस्वभावो भवेत्, भवेदन्यतोऽपि निमित्तात् स्वभावप्रतिबन्धः। प्रतिबद्धस्वभावत्वं हि स्वभावप्रतिबन्धः, न चान्यः कश्चिदायत्तस्वभावः। तस्मात् तादात्म्यतदुत्पत्तिभ्यामेव स्वभावप्रतिबन्धः।

भवतु नाम तादात्म्यतदुत्पत्तिभ्यामेव स्वभावप्रतिबन्धः, कार्यस्वभावयोरेव तु गमकत्वं कथमित्याह ––

**ते च तादात्म्यतदुत्पत्ती स्वभावकार्ययोरेवेति ताभ्यामेव वस्तुसिद्धिः ॥ २५ ॥**

इतिस्तस्मादर्थे। यस्मात् स्वभावे कार्ये एव च तादात्म्यतदुत्पत्ती स्थिते तन्निबन्धनश्च गम्यगमकभावः, तस्मात् 'ताभ्यामेव' कार्यस्वभावाभ्यां 'वस्तुनः' विधेः सिद्धिः।

अथ प्रतिषेधासिद्धिरदृश्यानुपलम्भादपि कस्मान्नेष्टेत्याह —

**प्रतिषेधसिद्धिरपि यथोक्ताया एवानुपलब्धेः ॥ २६ ॥**

प्रतिषेधव्यवहारस्य सिद्धिः यथोक्ता या दृश्यानुपलब्धिः तत एव भवति यतः, तस्मादन्यतो नोक्ता।

ततस्तावत् कस्माद्भवतीत्याह ––

**सति वस्तुनि तस्या असंभवात् ॥ २७ ॥**

सति तस्मिन् प्रतिषेध्ये वस्तुनि यस्माद् दृश्यानुपलब्धिः न संभवति, तस्मात् असंभवात् ततः प्रतिषेधसिद्धिः।

अथ तत एव कस्मादित्याह ––

**[ २८ ] अन्यथा च अनुपलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेष्वात्मप्रत्यक्षनिवृत्तेरभावनिश्चयाभावात् ॥ २८ ॥**

सति वस्तुनि तस्या अदृश्यानुपलब्धेः संभवादित्यन्यथा-

शब्दार्थः । एतस्मात्कारणान्नान्यस्या अनुपलब्धेः प्रतिषेधसिद्धिः ॥ कुत एतत् सत्यपि वस्तुनि तस्याः संभव इत्याह — अनुपलब्धिलक्षणप्राप्तेष्वित्यादि । इह प्रत्ययान्तरसाकल्यात् स्वभावविशेषाच्च उपलब्धिलक्षणप्राप्तोऽर्थः उक्तः । द्वयोरेकस्याप्यभावेऽनुपलब्धिलक्षणप्राप्तोऽर्थ उच्यते। तदिह अनुपलब्धिलक्षणप्राप्तेष्विति प्रत्ययान्तरकैवल्यवन्त उक्ताः । देशकालस्वभावविप्रकृष्टेष्विति स्वभावविशेषविप्रकृष्टा उक्ताः । देशश्च कालश्च स्वभावश्च तैर्विप्रकृष्टा इति विग्रहः । तेष्वभावनिश्चयस्याभावात् । सत्यपि वस्तुनि तस्याभाव इष्टः । कस्मान्निश्चयाभाव इत्याह— तेषु प्रतिपत्तुः 'आत्मनः' यत् प्रत्यक्षं तस्य निवृत्तेः कारणात् निश्चयाभावः। यस्मात् अनुपलब्धिलक्षणप्राप्तेष्वात्मप्रत्यक्षनिवृत्तेरभावनिश्चयाभावः, तस्मात् सत्यपि वस्तुन्यात्मप्रत्यक्षनिवृत्तिलक्षणाया अदृश्यानुपलब्धेः संभवः । ततो यथोक्ताया एव प्रतिषेधसिद्धिः ।

अथेयं दृश्यानुपलब्धिः कस्मिन्काले प्रमाणं किंस्वभावा किंव्यापारा चेत्याह —

**अमूढस्मृतिसंस्कारस्यातीतस्य वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्य निवृत्तिरभावव्यवहारसाधनी ॥ २९ ॥**

प्रतिपत्तुः प्रत्यक्षो घटादिरर्थः तस्य 'निवृत्तिः' अनुपलब्धिः, तदभावस्वभावेति यावत् । अत एवाभावो न साध्यः, स्वभावानुपलब्धेः सिद्धत्वात् । अविद्यमानोऽपि च घटादिरेकज्ञानसंसर्गिणि भूतले भासमाने समग्रसामग्रीको ज्ञायमानो दृश्यमानतया संभावितत्वात् प्रत्यक्षः उक्तः । अत एकज्ञानसंसर्गी दृश्यमानोऽर्थः तज्ज्ञानं च प्रत्यक्षनिवृत्तिरुच्यते । ततो हि दृश्यमानादर्थात् तद्बुद्धेश्च समग्रदर्शनसामग्रीकत्वेन प्रत्यक्षतया संभावितस्य निवृत्तिरवसीयते । तस्मादर्थज्ञानं एव प्रत्यक्षस्य घटस्याभाव उच्यते । न तु निवृत्तिमात्रमिहाभावः [ २९ ] निवृत्तिमात्रात् दृश्यनिवृत्त्यनिश्चयात् ॥ ननु च दृश्यनिवृत्तिरवसीयते दृश्यानुपलम्भात् । सत्यमेवैतत् । केवलमेकज्ञानसंसर्गिणि दृश्यमाने 'घटो यदि भवेद् दृश्य एव भवेत्' इति दृश्यः संभावितः ततो दृश्यानुपलब्धिर्निश्चिता । दृश्यानुपलब्धिनिश्चयसाम-

र्थ्यादेव च दृश्याभावो निश्चितः। यदि हि दृश्यस्तत्र भवेद् दृश्यानुपलम्भो न भवेत्। अतो दृश्यानुपलम्भनिश्चयाद् दृश्याभावः सामर्थ्यादवसितो न तु व्यवहृत इति दृश्यानुपलम्भेन व्यवहर्तव्यः। तस्मादर्थान्तरं एकज्ञानसंसर्गि दृश्यमानं तज्ज्ञानं च प्रत्यक्षानिवृत्तिनिश्चयहेतुत्वात् **प्रत्यक्षनिवृत्तिरुक्तं** द्रष्टव्यम्। यथा चैकज्ञानसंसर्गिणि प्रत्यक्षे घटस्य प्रत्यक्षत्वमारोपितमसतोऽपि; तथा तस्मिन्नेकज्ञानसंसर्गिण्यतीते, वर्तमाने चामूढस्मृतिसंस्कारे (च), घटस्य तद्रूपमारोपितमसतः इति द्रष्टव्यम्। अनेन दृश्यानुपलब्धिः प्रत्यक्षघटनिवृत्तिस्वभावोक्ता। सा च सिद्धा। तेन न घटाभावः साध्यः अपि त्वभावव्यवहार इत्युक्तम्।

'अमूढः' अभ्रष्टो दर्शनाहितः स्मृतिजननरूपः संस्कारो यस्मिन् घटादौ स तथोक्तः। तस्यातीतस्य प्रतिपत्तृप्रत्यक्षस्येति सम्बन्धः, वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्येति सम्बन्धः। अमूढस्मृतिसंस्कारग्रहणं तु न वर्तमानविशेषणम्। यस्मात् अतीते घटविविक्तप्रदेशदर्शने स्मृतिसंस्कारो मूढः दृश्यघटानुपलम्भे दृश्ये च घटे मूढो भवति, वर्तमाने च घटरहितप्रदेशदर्शने न स्मृतिसंस्कारमोहः; अत एव न घटानुपलम्भे नापि घटे मोहः। तस्मान्न वर्तमाननिषेध्याविशेषणं अमूढस्मृतिसंस्कारग्रहणम्। स्मृतिसंस्कारव्यभिचाराभावात् वर्तमानस्यार्थस्य। अत एव 'वर्तमानस्य च' इति चशब्दः कृतः, विशेषणरहितस्य वर्तमानस्य विशेषणवता अतीतेन समुच्चयो यथा विज्ञायेत। तदयमर्थः— अतीतोऽनुपलम्भः स्फुटं स्मर्यमाणः प्रमाणं वर्तमानश्च। ततः 'नासीदिह घटोऽनुपलब्धत्वात्' 'नास्त्यनुपलभ्यमानत्वात्' इति शक्यं ज्ञातुम्। न तु 'न भविष्यत्यत्र घटोऽनुपलप्स्यमानत्वात्' इति शक्यं ज्ञातुं, अनागताया अनुपलब्धेः सत्त्वसन्देहादिति कालविशेषः अनुपलब्धेर्व्याख्यातः।

व्यापारं दर्शयति। अभावस्य **व्यवहारः** 'नास्ति' इत्येवमाकारं ज्ञानं, शब्दश्चैवमाकारः, निःशङ्कगमनागमनलक्षणा च प्रवृत्तिः, कायिकोऽभावव्यवहारः। घटाभावे हि ज्ञाते निःशङ्कं गन्तुमागन्तुं च

प्रवर्तते । तदेवमेतस्य त्रिविधस्याप्यभावव्यवहारस्य दृश्यानुपलब्धिः [३०] 'साधनी' प्रवर्तिका । यद्यपि च 'नास्ति घटः' इति ज्ञानमनुपलब्धेरेव भवति अयमेव चाभावनिश्चयः; तथापि यस्मात् प्रत्यक्षेण केवलः प्रदेश उपलब्धः, तस्माद् 'इह घटो नास्ति' इत्येवं च प्रत्यक्षव्यापारमनुसरत्यभावनिश्चयः; तस्मात् प्रत्यक्षस्य केवलप्रदेशग्रहणव्यापारानुसार्यभावनिश्चयः प्रत्यक्षकृतः । किञ्च, दृश्यानुपलम्भनिश्चयकरणसामर्थ्यादेव पूर्वोक्तया नीत्या प्रत्यक्षेणैवाभावो निश्चितः । केवलमदृष्टानामपि सत्त्वसंभवात् । सत्त्वशङ्कया न शक्नोत्यसत्त्वं व्यवहर्तुम् । अतोऽनुपलम्भोऽभावं व्यवहारयति । दृश्यो यतोऽनुपलब्धः तस्मात् नास्ति इत्यतो दृश्यानुपलम्भोऽभावज्ञानं कृतं प्रवर्तयति न त्वकृतं करोति इत्यभावनिश्चयः अनुपलम्भात्प्रवृत्तोऽपि प्रत्यक्षेण कृतोऽनुपलम्भेन प्रवर्तित उक्त इत्यभावव्यहारप्रवर्तिन्यनुपलब्धिः ।

कस्मात्पुनरतीते वर्तमाने चानुपलब्धिर्गमिकेत्याह --

**तस्या एवाभावनिश्चयात् ॥ ३० ॥**

तस्या एव यथोक्तकालाया अनुपलब्धेरभावनिश्चयात् । अनागता ह्यनुपलब्धिः स्वयमेव संदिग्धस्वभावा । तस्या असिद्धाया नाभावनिश्चयः अपि त्वतीतवर्तमानाया इति ।

संप्रत्यनुपलब्धेः प्रकारभेदं दर्शयितुमाह --

**सा च प्रयोगभेदादेकादशप्रकारा ॥ ३१ ॥**

सा चैषाऽनुपलब्धिरेकादशप्रकारा । एकादश प्रकारा अस्या इत्येकादशप्रकारा । कुतः प्रकारभेदः । प्रयोगभेदात् । 'प्रयोगः' प्रयुक्तिः शब्दस्याभिधानव्यापार उच्यते । शब्दो हि साक्षात्काचिदर्थान्तराभिधायी काचित्प्रतिषेधान्तराभिधायी । सर्वत्रैव तु दृश्यानुपलब्धिरशब्दोपात्तापि गम्यत इति वाचकव्यापारभेदादनुपलम्भप्रकारभेदो न तु स्वरूपभेदादिति यावत् ।

प्रकारभेदानाह --

[३१] **स्वभावानुपलब्धिर्यथा नात्र धूमः उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति ॥ ३२ ॥**

प्रतिषेध्यस्य यः स्वभावः तस्यानुपलब्धिः। यथेति। 'अत्र' इति धर्मी 'न धूमः' इति साध्यम्। 'उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः' इति हेतुः। अयं च हेतुः पूर्ववद्व्याख्येयः ॥ १ ॥

**कार्यानुपलब्धिर्यथा नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमाभावात् ॥ ३३ ॥**

प्रतिषेध्यस्य यत्कार्यं तस्यानुपलब्धिरुदाह्रियते — यथेति। 'इह' इति धर्मी। 'अप्रतिबद्धं' अनुपहतं धूमजननं प्रति सामर्थ्यं येषां तान्यप्रतिबद्धसामर्थ्यानि। 'न सन्ति' इति साध्यम्। 'धूमाभावात्' इति हेतुः। कारणानि च नावश्यं कार्यवन्ति भवन्तीति कार्यादर्शनात् अप्रतिबद्धसामर्थ्यानामेवाभावः साध्यः, न त्वन्येषाम्। अप्रतिबद्धशक्तीनि चान्त्यक्षणभावीन्येव, अन्येषां प्रतिबन्धसंभवात्। कार्यानुपलब्धिश्च यत्र कारणमदृश्यं तत्र प्रयुज्यते। दृश्ये तु कारणे दृश्यानुपलब्धिरेव गमिका। तत्र धवलगृहोपरिस्थितो गृहाङ्गणमपश्यन्नपि चतुर्षु पार्श्वेष्वङ्गणभित्तिपर्यन्तं पश्यति। भित्तिपर्यन्तसमं चालोकसंज्ञकमाकाशदेशं धूमविविक्तं पश्यति। तत्र धूमाभावनिश्चयात्— यद्देशस्थेन वह्निना जन्यमानो धूमस्तद्देशः स्यात्— तस्य वह्नेरप्रतिबद्धसामर्थ्यस्याभावः प्रतिपत्तव्यः। तद्गृहाङ्गणदेशेन च वह्निना जन्यमानो धूमस्तद्देशः स्यात्। तस्मात्तद्देशस्य वह्नेरभावः प्रतिपत्तव्यः। तद्गृहाङ्गणदेशं भित्तिपरिक्षिप्तं भित्तिपर्यन्तपरिक्षिप्तेन चालोकात्मना धूमविविक्तेनाकाशदेशेन सह धर्मिणं करोति। तस्मात् दृश्यमानादृश्यमानाकाशदेशावयवः प्रत्यक्षाप्रत्यक्षसमुदायो वह्न्यभावप्रतीतिसामर्थ्यायातो धर्मी न दृश्यमान एव। इहेति तु प्रत्यक्षनिर्देशो दृश्यमानभागापेक्षः — न केवलमिहैव दृश्यादृश्यसमुदायो धर्मी अपि त्वन्यत्रापि। शब्दस्य क्षणिकत्वे साध्ये कश्चिदेव शब्दः प्रत्यक्षोऽन्यस्तु परोक्षः तद्वदिहापि। यथा चात्र [३२] धर्मी साध्यप्रतिपत्त्याधिकरणभूतो दृश्यादृश्यावयवो दर्शितः तद्वदुत्तरेष्वपि प्रयोगेषु स्वयं प्रतिपत्तव्यः ॥२॥

**व्यापकानुपलब्धिर्यथा नात्र शिंशपा वृक्षाभावादिति ॥ ३४ ॥**

प्रतिषेध्यस्य व्याप्यस्य यो व्यापको धर्मः तस्यानुपलब्धिरुदाह्रियते– यथेति । अत्र [इति] धर्मी । न शिंशपेति शिंशपाभावः साध्यः । वृक्षस्य व्यापकस्याभावादिति हेतुः । इयमप्यनुपलब्धिः व्याप्यस्य शिंशपात्वस्य दृश्याभावे प्रयुज्यते । उपलब्धिलक्षणप्राप्ते तु व्याप्ये दृश्यानुपलब्धिर्गमिका । तत्र यदा पूर्वापरावुपश्लिष्टौ समुन्नतौ देशौ भवतः तयोरेकस्तरुगहनोपेतः अपरश्चैकशिलाघटितो निर्वृक्षकक्षः ; द्रष्टापि तत्स्थान्वृक्षान् पश्यन्नपि शिंशपादिभेदं यो न विवेचयति, तस्य वृक्षत्वं प्रत्यक्षं अप्रत्यक्षं शिंशपात्वम् । स हि निर्वृक्षे एकशिलाघटिते वृक्षाभावं दृश्यत्वाद् दृश्यानुपलम्भादवस्यति, शिंशपात्वाभावं तु व्यापकस्य वृक्षत्वस्याभावादिति । तादृशे विषयेऽस्या अभावसाधनाय प्रयोगः ॥३॥

**स्वभावविरुद्धोपलब्धिर्यथा नात्र शीतस्पर्शोऽग्नेरिति ॥ ३५ ॥**

प्रतिषेध्यस्य स्वभावेन विरुद्धस्योपलब्धिरुदाह्रियते— यथेति । अत्रेति धर्मी । न शीतस्पर्श इति शीतस्पर्शप्रतिषेधः साध्यः । वह्नेरिति हेतुः । इयं चानुपलब्धिः तत्र प्रयोक्तव्या यत्र शीतस्पर्शोऽदृश्यः । दृश्ये दृश्यानुपलब्धिप्रयोगात् । तस्मात् यत्र वर्णविशेषात् वह्निर्दृश्यः शीतस्पर्शो दूरस्थत्वात् सन्नप्यदृश्यः तत्रास्याः प्रयोगः ॥ ४ ॥

**विरुद्धकार्योपलब्धिर्यथा नात्र शीतस्पर्शो धूमादिति ॥ ३६ ॥**

प्रतिषेध्येन यत् विरुद्धं तत्कार्यस्योपलब्धिर्गमिका । यथेति । अत्रेति धर्मी । न शीतस्पर्श इति शीतस्पर्शाभावः साध्यः । धूमादिति हेतुः । यत्र शीतस्पर्शः सन् दृश्यः स्यात् , तत्र दृश्यानुपलब्धिर्गमिका । यत्र विरुद्धो वह्निः [ ३३ ] प्रत्यक्षः, तत्र विरुद्धोपलब्धिः । द्वयोरपि तु परोक्षत्वे विरुद्धकार्योपलब्धिः प्रयुज्यते । तत्र समस्तापवरकस्थं शीतं निवर्तयितुं समर्थस्याग्नेरनुमापकं यदा विशिष्टं धूमकलापं निर्यान्तमपवरकात् पश्यति तदा विशिष्टाद्वह्नेरनुमितात् शीतस्पर्शनिवृत्तिमनुमिमीते । इह दृश्यमानद्वारप्रदेशसहितः सर्वापवरकाभ्यन्तरदेशो धर्मी साध्यप्रतिपत्त्यनुसरणात् पूर्ववत् द्रष्टव्यः ॥ ५ ॥

**विरुद्धव्याप्तोपलब्धिर्यथा न ध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति ॥ ३७ ॥**

प्रतिषेध्यस्य यत् विरुद्धं तेन व्याप्तस्य धर्मान्तरस्योपलब्धिरुदाहर्तव्या — यथेति । ' ध्रुवं ' अवश्यं भवतीति ध्रुवभावी नेति ध्रुवभावित्वनिषेधः साध्यः । विनाशो धर्मी । ' भूतस्यापि भावस्य ' इति धर्मिविशेषणम् । ' भूतस्य ' जातस्यापि विनश्वरः स्वभावो नावश्यंभावी किमुताजातस्य इत्यपिशब्दार्थः । जनकाद्धेतोरन्यो हेतुः ' हेत्वन्तरं ' मुद्गरादि –तदपेक्षते विनश्वरः– तस्यापेक्षणादिति हेतुः । हेत्वन्तरापेक्षणं नामाध्रुवभावित्वेन व्याप्तम् । यथा वाससि रागस्य रञ्जनादिहेत्वन्तरापेक्षणमध्रुवभावित्वेन व्याप्तम् । ध्रुवभावित्वविरुद्धं चाध्रुवभावित्वम् । विनाशश्च विनश्वरस्वभावात्मा हेत्वन्तरापेक्ष इष्टः । ततो विरुद्धव्याप्तहेत्वन्तरापेक्षणदर्शनाद् ध्रुवभावित्वनिषेधः । इह ध्रुवभावित्वं नित्यत्वं अध्रुवभावित्वं चानित्यत्वम् । नित्यत्वानित्यत्वयोश्च परस्परपरिहारेणावस्थानात् एकत्र विरोधः । तथा च सति परस्परपरिहारवतोर्द्वयोः यत्रैकं दृश्यते तत्र द्वितीयस्य तादात्म्यनिषेधः कार्यः । तादात्म्यनिषेधश्च दृश्यतयाऽभ्युपगतस्य संभवति । यतः, एवं तादात्म्यनिषेधः क्रियते— ' यद्ययं दृश्यमानो नित्यो भवेत् नित्यरूपो दृश्येत । न च नित्यरूपो दृश्यते । तस्मान्न नित्यः ' । एवं च प्रतिषेध्यस्य नित्यत्वस्य दृश्यमानात्मत्वमभ्युपगम्य प्रतिषेधः कृतो भवति । वस्तुनोऽप्यदृश्यस्य पिशाचादेर्यदि दृश्यघटात्मत्वनिषेधः क्रियते, दृश्यात्मत्वमभ्युपगम्य कर्तव्यः — ' यद्ययं दृश्यमानः पिशाचात्मा भवेत् पिशाचो दृष्टो भवेत्, न च दृष्टः, तस्मान्न पिशाचः' इति । दृश्यात्मत्वाभ्युपगमपूर्वकः दृश्यमाने घटादौ वस्तुनि वस्तुनोऽवस्तुनो वा दृश्यस्यादृश्यस्य च [ ३४ ] तादात्म्यनिषेधः । तथा च सति, यथा घटस्य दृश्यत्वमभ्युपगम्य प्रतिषेधो दृश्यानुपलम्भादेव, तद्वत् सर्वस्य परस्परपरिहारवतोऽन्यत्र दृश्यमाने निषेधः दृश्यानुपलम्भादेव । तथा चास्यैवंजातीयकस्य प्रयोगस्य स्वभावानुपलब्धावन्तर्भावः ॥ ६ ॥

**कार्यविरुद्धोपलब्धिर्यथा नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्त्यग्नेरिति ॥ ३८ ॥**

प्रतिषेध्यस्य यत् कार्यं तस्य यत् विरुद्धं तस्योपलब्धेरुदाहरणम् — यथेति । इहेति धर्मी । अप्रतिबद्धं सामर्थ्यं येषां शीतकारणानां

शीतजननं प्रति न तानि सन्तीति साध्यम् । वह्नेरिति हेतुः । यत्र शीतकारणान्यदृश्यानि शीतस्पर्शोऽप्यदृश्यः तत्रायं हेतुः प्रयोक्तव्यः । दृश्यत्वे तु शीतस्पर्शस्य तत्कारणानां वा कार्यानुपलब्धिः दृश्यानुपलब्धिर्वा गमिका । तस्मादेषाप्यभावसाधनी । ततो यस्मिन्देशे सदपि शीतकारणमदृश्यं शीतस्पर्शश्च दूरस्थत्वात्प्रतिपत्तुः, वह्निः[तु] भास्वरवर्णत्वात् दूरादपि दृश्यः तत्रायं प्रयोगः ॥ ७ ॥

**व्यापकविरुद्धोपलब्धिर्यथा नात्र तुषारस्पर्शोऽग्नेरिति ॥ ३९ ॥**

प्रतिषेध्यस्य यत् व्यापकं तेन यत् विरुद्धं तस्योपलब्धिरुदाहर्तव्या—यथेति । अत्रेति धर्मी । तुषारस्पर्शो नेति साध्यम् । वह्नेरिति हेतुः । यत्र व्याप्यस्तुषारस्पर्शो व्यापकश्च शीतस्पर्शो न दृश्यः तत्रायं हेतुः, तयोर्दृश्यत्वे स्वभावस्य व्यापकस्य चानुपलब्धिर्यतः प्रयोक्तव्या । तथा च सत्यभावसाधनी इयम् । दूरवर्तिनश्च प्रतिपत्तुः तुषारस्पर्शः, शीतस्पर्शविशेषः शीतमात्रं च परोक्षम् । वह्निस्तु रूपविशेषाद् दूरस्थोऽपि प्रत्यक्षः । ततो वह्नेः शीतमात्राभावः । ततः शीतविशेषतुषारस्पर्शाभावनिश्चयः, शीतविशेषस्य शीतसामान्येन व्याप्तत्वादिति विशिष्टविषयेऽस्याः प्रयोगः ॥ ८ ॥

[ ३५ ] **कारणानुपलब्धिर्यथा नात्र धूमोऽग्न्यभावादिति ॥ ४० ॥**

प्रतिषेध्यस्य यत् कारणं तस्यानुपलब्धेरुदाहरणम्— यथेति । अत्रेति धर्मी । न धूम इति साध्यम् । वह्न्यसत्त्वादिति हेतुः । यत्र कार्यं सदपि दृश्यं न भवति तत्रायं प्रयोगः । दृश्ये तु कार्ये दृश्यानुपलब्धिः गमिका । ततोऽयमप्यभावसाधनः । निष्कम्पायतसलिलपूरिते ह्रदे हेमन्तोचितबाष्पोद्गमे विरले संध्यातमसि सति, सन्नपि तत्र धूमो न दृश्यः इति कारणानुपलब्ध्या प्रतिषिध्यते । वह्निस्तु यदि तस्याम्भस उपरि प्लवमानो भवेत् ज्वलितो रूपविशेषादेवोपलब्धो भवेत् । अज्वलितस्तु इन्धनमध्यनिविष्टो भवेत् तत्रापि दहनाधिकरणमिन्धनं प्रत्यक्षमिति स्वरूपेणाधाररूपेण वा दृश्य एव वह्निः इति तत्रास्याः प्रयोगः ॥ ९ ॥

**कारणविरुद्धोपलब्धिर्यथा नास्य रोमहर्षादिविशेषाः संनिहितदहनविशेषत्वादिति ॥ ४१ ॥**

प्रतिषेध्यस्य यत्कारणं तस्य यद्विरुद्धं तस्योपलब्धेरुदाहरणम्—

यथेति । अस्येति धर्मी । रोम्णां 'हर्षः' उद्भेदः स आदिर्येषां दन्तवीणादीनां शीतकृतानां, ते [ विशेषाः ] विशिष्यन्ते तदन्येभ्यो भयश्रद्धादिकृतेभ्य इति 'रोमहर्षादिविशेषाः'। ते न सन्तीति साध्यम् । दहनः एव विशिष्यते तदन्यस्माद्दहनात् शीतनिवर्तनसामर्थ्येनेति दहनविशेषः । कश्चिद्दहनः सन्नपि न शीतनिवर्तनक्षमो यथा प्रदीपः । तादृशनिवृत्तये विशेषग्रहणम् । संनिहितो दहनविशेषो यस्य स तथोक्तः तस्य भावः तस्मादिति हेतुः । यत्र शीतस्पर्शः सन्नप्यदृश्यो रोमहर्षादिविशेषाश्चादृश्याः, तत्रायं प्रयोगः । रोमहर्षादिविशेषस्य दृश्यत्वे दृश्यानुपलब्धिः प्रयोक्तव्या; शीतस्पर्शस्य दृश्यत्वे कारणानुपलब्धिः । तस्मादभावसाधनोऽयम् । रूपविशेषाद्धि दूरात् दहनं पश्यति, शीतस्पर्शस्त्वदृश्यो रोमहर्षादिविशेषाश्च । तेषां कारणविरुद्धोपलब्ध्या अभावः प्रतिपद्यत इति तत्रास्याः प्रयोगः ॥ १० ॥

**[३६] कारणविरुद्धकार्योपलब्धिर्यथा न रोमहर्षादिविशेषयुक्तपुरुषवानयं प्रदेशो धूमादिति ॥ ४२ ॥**

प्रतिषेध्यस्य यत् कारणं तस्य यत् विरुद्धं तस्य यत् कार्यं तस्योपलब्धिरुदाहर्तव्या- यथेति । अयं देश इति धर्मी । योगो 'युक्तं', रोमहर्षादिविशेषयुक्तं रोमहर्षादिविशेषैर्युक्तम् । तस्य संबन्धी पुरुषो 'रोमहर्षादिविशेषयुक्तपुरुषः'। तद्वान् न भवतीति साध्यम् । धूमादिति हेतुः । रोमहर्षादिविशेषस्य प्रत्यक्षत्वे दृश्यानुपलब्धिः, कारणस्य शीतस्पर्शस्य प्रत्यक्षत्वे कारणानुपलब्धिः, वह्नेस्तु प्रत्यक्षत्वे कारणविरुद्धोपलब्धिः प्रयोक्तव्या । त्रयाणामप्यदृश्यत्वेऽयं प्रयोगः । तस्मादभावसाधनोऽयम् । तत्र दूरस्थस्य प्रतिपत्तुः दहनशीतस्पर्शरोमहर्षादिविशेषा अप्रत्यक्षाः सन्तोऽपि धूमस्तु प्रत्यक्षो यत्र, तत्रैतत्प्रमाणम् । धूमस्तु यादृशः तस्मिन्देशे स्थितं शीतं निवर्तयितुं समर्थस्य वह्नेरनुमापकः स इह ग्राह्यः । धूममात्रेण तु वह्निमात्रेऽनुमितेऽपि न शीतस्पर्शनिवृत्तिः नापि रोमहर्षादिविशेषनिवृत्तिरवसातुं शक्येति न धूममात्रं हेतुरिति द्रष्टव्यमिति ॥ ११ ॥

यद्येकः प्रतिषेधहेतुरुक्तः कथमेकादश अभावहेतव इत्याह-

**इमे सर्वे कार्यानुपलब्ध्यादयो दशानुपलब्धिप्रयोगाः स्वभावानुपलब्धौ सङ्ग्रहमुपयान्ति ॥ ४३ ॥**

'इमे' अनुपलब्धिप्रयोगाः । इदमा अनन्तरप्रक्रान्ता निर्दिष्टाः ।

तत्र कियतामपि ग्रहणे प्रसक्ते आह— कार्यानुपलब्ध्यादय इति । कार्यानुपलब्ध्यादीनामपि त्रयाणां चतुर्णां वा ग्रहणे प्रसक्ते सत्याह— दशेति । दशानामप्युदाहृतमात्राणां ग्रहणप्रसङ्गे सत्याह— सर्वे इति । एतदुक्तं भवति । अप्रयुक्ता अपि प्रयुक्तोदाहरणसदृशाश्च सर्वे एवेति दशग्रहणमन्तरेण सर्वग्रहणे क्रियमाणे प्रयुक्तोदाहरणकार्त्स्न्यं गम्येत । दशग्रहणात्तु उदाहरणकार्त्स्न्येऽवगते सर्वग्रहणं अतिरिच्यमानं उदाहृतसदृशकार्त्स्न्यावगतये जायते । ते स्वभावानुपलब्धौ संग्रहं तादात्म्येन गच्छन्ति । स्वभावानुपलब्धिस्वभावाः इत्यर्थः ।

[३७] ननु च स्वभावानुपलब्धिप्रयोगात् भिद्यन्ते कार्यानुपलब्ध्यादयः तत्कथं अन्तर्भवन्तीत्याह—

**पारम्पर्येण अर्थान्तरविधिप्रतिषेधाभ्यां प्रयोगभेदेऽपि ॥ ४४ ॥**

प्रयोगभेदेऽपि । 'प्रयोगस्य' शब्दव्यापारस्य भेदेऽपि अन्तर्भवन्ति । कथं प्रयोगभेद इत्याह— अर्थान्तरविधीत्यादि । प्रतिषेध्यादर्थादर्थान्तरस्य 'विधिः' उपलब्धिः स्वभावविरुद्धाद्युपलब्धिप्रयोगेषु । प्रतिषेधः कार्यानुपलब्ध्यादिप्रयोगेषु । अर्थान्तरविधिना अर्थान्तरप्रतिषेधेन च प्रयोगा भिद्यन्ते । यदि प्रयोगान्तरेष्वर्थान्तरविधिप्रतिषेधौ, कथं तर्ह्यन्तर्भवन्तीत्याह — पारम्पर्येणेति । प्रणालिकयेत्यर्थः । एतदुक्तं भवति । न साक्षादेते प्रयोगा दृश्यानुपलब्धिमभिदधति ; दृश्यानुपलब्ध्यव्यभिचारिणं त्वर्थान्तरस्य विधिं निषेधं वाभिदधति । ततः प्रणालिकयाऽमीषां स्वभावानुपलब्धौ संग्रहो न साक्षादिति ।

यदि प्रयोगभेदेन भेदः, परार्थानुमाने वक्तव्य एषः । शब्दभेदो हि प्रयोगभेदः । शब्दश्च परार्थानुमानमित्याशङ्क्याह——

**प्रयोगदर्शनाभ्यासात्स्वयमप्येवं व्यवच्छेदप्रतीतिर्भवतीति स्वार्थेऽप्यनुमानेऽस्याः प्रयोगनिर्देशः ॥४५॥**

प्रयोगदर्शनेत्यादि । प्रयोगाणां शास्त्रघटितानां 'दर्शनं' उपलम्भः । तस्य 'अभ्यासः' पुनः पुनरावर्तनम् । तस्मान्निमित्तात् 'स्वयमपि' इति प्रतिपत्तुरात्मनोऽपि 'एवं' इत्यनन्तरोक्तेन क्रमेण 'व्यवच्छेदस्य' प्रतिषेधस्य प्रतीतिर्भवतीति । इतिशब्दः तस्मादर्थे । तदयमर्थः —— यस्मात् स्वयमप्येवं अनेनोपायेन प्रतिपद्यते प्रयोगाभ्यासात् तस्मात् स्वप्रतिपत्तावप्युपयुज्यमानस्यास्य प्रयोगभेदस्य स्वार्थानुमाने

निर्देशः। यत्पुनः परप्रतिपत्तावेवोपयुज्यते तत्परार्थानुमाने एव वक्तव्यमिति।

ननु च कार्यानुपलब्ध्यादिषु कारणादीनामदृश्यानामेव प्रतिषेधः, दृश्यनिषेधे स्वभावानुपलम्भप्रयोगप्रसङ्गात् । तथा च सति न तेषां दृश्यानुपलब्धेर्निषेधः, तत्कथमेषां प्रयोगाणां दृश्यानुपलब्धावन्तर्भाव इत्याह––

**[३८] सर्वत्र चास्यामभावव्यवहारसाधन्यामनुपलब्धौ येषां स्वभावविरुद्धादीनामुपलब्ध्या कारणादीनामनुपलब्ध्या च प्रतिषेध उक्तस्तेषामुपलब्धिलक्षणप्राप्तानामेवोपलब्धिरनुपलब्धिश्च वेदितव्या ॥४६॥**

अभावश्च तद्व्यवहारश्च 'अभावव्यवहारौ'। स्वभावानुपलब्धावभावव्यवहारः साध्यः ।. शिष्टेष्वभावः । तयोः साधन्यामनुपलब्धौ । सर्वत्र चेति चशब्दो हिशब्दस्यार्थे । यस्मात् सर्वत्रानुपलब्धौ सत्यां येषां प्रतिषेध उक्तः तेषामुपलब्धिलक्षणप्राप्तानां दृश्यानामेव स प्रतिषेधः, तस्मात् दृश्यानुपलब्धावन्तर्भावः । कुत एतत् दृश्यानामेवेत्याह –– स्वभावेत्यादि । अत्रापि चकारो हेत्वर्थः । यस्मात्स्वभावाविरुद्धः आदिर्येषां तेषामुपलब्ध्या, कारणमादिर्येषां तेषामनुपलब्ध्या [च] प्रतिषेध उक्तः, तस्मात् दृश्यानामेव प्रतिषेध इत्यर्थः ॥ यदि नाम स्वभावविरुद्धाद्युपलब्ध्या कारणाद्यनुपलब्ध्या च प्रतिषेध उक्तः तथापि कथं दृश्यानामेव प्रतिषेध इत्याह– उपलब्धिरित्यादि । अत्रापि चकारो हेत्वर्थः । यस्मात् ये विरोधिनो व्याप्यव्यापकभूताः कार्यकारणभूताश्च ज्ञाताः तेषामवश्यमेवोपलब्धिः, उपलब्धिपूर्वा चानुपलब्धिर्वेदितव्या। उपलब्ध्यनुपलब्धी च द्वे येषां स्तः ते दृश्या एव । तस्मात् स्वभावविरुद्धाद्युपलब्ध्या कारणाद्यनुपलब्ध्या चोपलब्ध्यनुपलब्धिमतां विरुद्धादीनां प्रतिषेधः क्रियमाणो दृश्यानामेव कृतो द्रष्टव्यः । बहुषु चोद्येषु प्रक्रान्तेषु परिहारसमुच्चयार्थश्चकारो हेत्वर्थो भवति । यस्मात् इदं चेदं च समाधानमास्ति तस्मात् तत्तच्चोद्यमयुक्तमिति चकारार्थः ।

कस्मात्पुनः प्रतिषेध्यानां विरुद्धादीनामुपलब्ध्यनुपलब्धी वेदितव्ये इत्याह —

**अन्येषां विरोधकार्यकारणभावाभावासिद्धेः ॥ ४७ ॥**

उपलब्ध्यनुपलब्धिमद्भ्योऽन्येऽनुपलब्धा एव ये तेषां, विरोधश्च कार्यकारणभावश्च केनचित्सहाभावश्च व्याप्यस्य व्यापकस्याभावेन सिध्यति यस्मात् ततो विरोधिकार्यकारणभावाभावासिद्धेः कारणात् उपलब्ध्यनुपलब्धिमन्त एव विरुद्धादयो निषेध्याः । [ ३९ ] उभयवन्तश्च दृश्या एव । तस्मात् दृश्यानामेव प्रतिषेधः । तदयमर्थः – विरोधश्च कार्यकारणभावश्च व्यापकाभावे व्याप्याभावश्च दृश्यानुपलब्धेरेवेति । एकसंनिधावपराभावप्रतीतौ ज्ञातो विरोधः । कारणाभिमताभावे च कार्याभिमताभावप्रत्ययेऽवसितः कार्यकारणभावः । व्यापकाभिमताभावे च व्याप्याभावे निश्चिते निश्चितो व्याप्यव्यापकभावः । तत्र व्याप्यव्यापकभावप्रतीतेर्निमित्तं अभावः प्रतिपत्तव्यः । इह गृहीते वृक्षाभावे हि शिंशपात्वाभावप्रतीतौ प्रतीतो व्याप्यव्यापकभावः । अभावप्रतिपत्तिश्च सर्वत्र दृश्यानुपलब्धेरेव । तस्मात् विरोधं कार्यकारणभावं व्याप्यव्यापकभावं च स्मरता विरोधकार्यकारणभावव्याप्यव्यापकभावविषयाभावप्रतिपत्तिनिबन्धनं दृश्यानुपलब्धिः स्मर्तव्या। दृश्यानुपलब्ध्यस्मरणे विरोधादीनामस्मरणम् । तथा च सति न विरुद्धादिविधिप्रतिषेधाभ्यामितराभावप्रतीतिः स्यात् । विरोधादिग्रहणकालभाविन्यां च दृश्यानुपलब्धाववश्यस्मर्तव्यायां तत एवाभावप्रतीतिः । तत्र यद्यपि संप्रति नास्ति दृश्यानुपलब्धिः, विरोधादिग्रहणकाले त्वासीत् । या दृश्यानुपलब्धिः संप्रति स्मर्यमाणा सैवाभावप्रतिपत्तिनिबन्धनम् । ततः ‘ संप्रति नास्ति दृश्योपलब्धिः ’ इत्यभावसाधनत्वेन दृश्यानुपलब्धिप्रयोगात् भिद्यन्ते कार्यानुपलब्ध्यादिप्रयोगाः । विरुद्धविधिना कारणादिनिषेधेन च यतो दृश्यानुपलब्धिराक्षिप्ता ततो दृश्यानुपलब्धेरेव कालान्तरवृत्तायाः स्मृतिविषयभूताया अभावप्रतिपत्तिः । अमीषां च प्रयोगाणां दृश्यानुपलब्धावन्तर्भावः । तदनेन सर्वेण दृश्यानुपलब्धावन्तर्भावो दशानामनुपलब्धिप्रयोगाणां पारम्पर्येण दर्शित इति वेदितव्यम् ।

उक्ता दृश्यानुपलब्धिः अभावेऽभावव्यवहारे च साध्ये प्रमाणम् । अदृश्यानुपलब्धिस्तु किंस्वभावा किंव्यापारा चेत्याह—

**विप्रकृष्टविषयानुपलब्धिः प्रत्यक्षानुमान-निवृत्तिलक्षणा संशयहेतुः ॥ ४८ ॥**

विप्रकृष्टः त्रिभिर्देशकालस्वभावविप्रकर्षैः यस्या विषयः सा विप्रकृष्टविषयेति संशयहेतुः । किंस्वभावा सेत्याह – प्रत्यक्षानुमाननिवृत्तिः 'लक्षणं' स्वभावो यस्याः सा 'प्रत्यक्षानुमाननिवृत्तिलक्षणा' । ज्ञानज्ञेय-स्वभावेति यावत् ।

[४०] ननु च प्रमाणात् प्रमेयसत्ताव्यवस्था; ततः प्रमाणाभावात् प्रमेयाभावप्रतिपत्तिर्युक्तेत्याह—

**प्रमाणनिवृत्तावप्यर्थाभावासिद्धेरिति ॥ ४९ ॥**

प्रमाणनिवृत्तावपीत्यादि । कारणं व्यापकं च निवर्तमानं कार्यं व्याप्यं च निवर्तयेत् । न च प्रमाणं प्रमेयस्य कारणं नापि व्यापकं; अतः प्रमाणयोर्निवृत्तावप्यर्थस्य प्रमेयस्य निवृत्तिर्न सिध्यति । ततोऽसिद्धेः संशयहेतुरदृश्यानुपलब्धिः, न निश्चयहेतुः । यत्पुनः प्रमाणसत्तया प्रमेयसत्ता सिध्यति, तद्युक्तम् । प्रमेयकार्यं हि प्रमाणम् । न च कारणमन्तरेण कार्यमस्ति । न च कारणान्यवश्यं कार्यवन्ति भवन्ति । तस्मात् प्रमाणात् प्रमेयसत्ता व्यवस्थाप्या; न प्रमाणाभावात् प्रमेयाभावव्यवस्थेति ॥

**इति न्यायबिन्दुटीकायां द्वितीयः [स्वार्थानुमान-] परिच्छेदः समाप्तः ।**

---

# अथ तृतीयपरिच्छेदः ।

[ ४१ ] स्वार्थपरार्थानुमानयोः स्वार्थं व्याख्याय परार्थं व्याख्यातुकाम आह—

**त्रिरूपलिङ्गाख्यानं परार्थानुमानम् ॥ १ ॥**

त्रिरूपलिङ्गाख्यानमिति । त्रीणि रूपाणि अन्वयव्यतिरेकपक्षधर्मत्वसंज्ञकानि यस्य तत् त्रिरूपम् । त्रिरूपं च तल्लिङ्गं च तस्याख्यानम् । आख्यायते प्रकाश्यतेऽनेन त्रिरूपं लिङ्गमिति 'आख्यानम्' । किं पुनस्तत्? वचनम् । वचनेन हि त्रिरूपं लिङ्गमाख्यायते । परस्मायिदं परार्थम् ।

ननु च सम्यग्ज्ञानात्मकमनुमानमुक्तम्; तत्किमर्थं संप्रति वचनात्मकमनुमानमुच्यत इत्याह—

**कारणे कार्योपचारात् ॥ २ ॥**

कारणे कार्योपचारादिति । त्रिरूपलिङ्गाभिधानात् त्रिरूपलिङ्गस्मृतिरुत्पद्यते, स्मृतेश्चानुमानम् । तस्यानुमानस्य परम्परया त्रिरूपलिङ्गाभिधानं कारणम् । तस्मिन्कारणे वचने कार्यस्यानुमानस्य 'उपचारः' समारोपः क्रियते। ततः समारोपात् कारणं वचनमनुमानशब्देनोच्यते । औपचारिकं वचनमनुमानं, न मुख्यमित्यर्थः । न च यावत्किंचित् उपचारादनुमानशब्देन वक्तुं शक्यं तावत्सर्वं व्याख्येयम्, किं त्वनुमानं व्याख्यातुकामेनानुमानस्वरूपस्य व्याख्येयत्वात् निमित्तं व्याख्येयम् । निमित्तं च त्रिरूपं लिङ्गम् । तच्च स्वयं वा प्रतीतं अनुमानस्य [ ४२ ] निमित्तं भवति, परेण वा प्रतिपादितम् । तस्मात् लिङ्गस्य स्वरूपं व्याख्येयं, तत्प्रतिपादकश्च शब्दः । तत्र स्वरूपं स्वार्थानुमाने व्याख्यातम् । प्रतिपादकः शब्द इह व्याख्येयः । ततः प्रतिपादकं शब्दं अवश्यवक्तव्यं दर्शयन्ननुमानशब्देनोक्तवानाचार्य इति परमार्थः ।

परार्थानुमानस्य प्रकारभेदं दर्शयितुमाह—

**तत् द्विविधम् ॥ ३ ॥**

तदिति परार्थानुमानम्। द्वौ विधौ प्रकारौ यस्य तत् द्विविधम्।

कुतो द्विविधमित्याह—

**प्रयोगभेदात् ॥ ४ ॥**

प्रयोगस्य शब्दव्यापारस्य भेदात्। प्रयुक्तिः प्रयोगः अर्थाभिधानम्। शब्दस्यार्थाभिधानव्यापारभेदात् द्विविधमनुमानम्।

तदेवाभिधानव्यापारनिबन्धनं द्वैविध्यं दर्शयितुमाह—

**साधर्म्यवद्वैधर्म्यवच्चेति ॥ ५ ॥**

समानो धर्मो यस्य सोऽयं सधर्मा तस्य भावः साधर्म्यम्। विसदृशो धर्मोऽस्य विधर्मा विधर्मणो भावो वैधर्म्यम्। दृष्टान्तधर्मिणा सह साध्यधर्मिणः सादृश्यं हेतुकृतं साधर्म्यमुच्यते। असादृश्यं च हेतुकृतं वैधर्म्यमुच्यते। तत्र यस्य साधनवाक्यस्य साधर्म्यमभिधेयं तत् साधर्म्यवत्। यथा – यत् कृतकं तदनित्यं यथा घटः तथा च कृतकः शब्द इत्यत्र कृतकत्वकृतं दृष्टान्तसाध्यधर्मिणोः सादृश्यमभिधेयम्। यस्य तु वैधर्म्यमभिधेयं तत् वैधर्म्यवत्। यथा – यन्नित्यं तदकृतकं दृष्टं यथाकाशम् शब्दस्तु कृतक इति कृतकत्वाकृतकत्वकृतं शब्दाकाशयोः साध्यदृष्टान्तधर्मिणोरसादृश्यमिहाभिधेयम्।

यद्यनयोः प्रयोगयोरभिधेयं भिन्नं कथं तर्हि त्रिरूपं लिङ्गमभिन्नं प्रकाश्यमित्याह–

[४३] **नानयोरर्थतः भेदः कश्चित् ॥ ६ ॥**

नानयोरर्थत इति। 'अर्थः' प्रयोजनं प्रकाशयितव्यं वस्तु, यदुद्दिश्यानुमाने प्रयुज्येते। ततः प्रयोजनात् अनयोर्न भेदः कश्चित्। त्रिरूपं हि लिङ्गं प्रकाशयितव्यम्। तदुद्दिश्य द्वे अप्येते प्रयुज्येते।

द्वाभ्यामपि त्रिरूपं लिङ्गं प्रकाश्यत एव। ततः प्रकाशयितव्यं प्रयोजनमनयोरभिन्नम्। तथा च न ततो भेदः कश्चित्।

अभिधेयभेदोऽपि तर्हि न स्यादित्याह—

**अन्यत्र प्रयोगभेदात् ॥ ७ ॥**

अन्यत्र प्रयोगभेदादिति। 'प्रयोगः' अभिधानं वाचकत्वम्। वाचकत्वभेदादन्यो भेदः प्रयोजनकृतो नास्तीत्यर्थः। एतदुक्तं भवति। अन्यदभिधेयं अन्यत्प्रकाश्यं प्रयोजनम्। तत्राभिधेयापेक्षया वाचकत्वं भिद्यते। प्रकाश्यं त्वभिन्नम्। अन्वये हि कथिते, वक्ष्यमाणेन न्यायेन व्यतिरेकगतिर्भवति; व्यतिरेके चान्वयगतिः। ततः त्रिरूपं लिङ्गं प्रकाश्यमभिन्नम्। न च यत्राभिधेयभेदः तत्र सामर्थ्यगम्योऽप्यर्थो भिद्यते; यस्मात् 'पीनो देवदत्तो दिवा न भुङ्क्ते', 'पीनो देवदत्तो रात्रौ भुङ्क्ते' इत्यनयोर्वाक्ययोराभिधेयभेदेऽपि गम्यमानमेकमेव। तद्वत् इहाभिधेयभेदेऽपि गम्यमानं वस्तु एकमेव।

**तत्र साधर्म्यवत् ॥ ८ ॥**

तत्रेति तयोः साधर्म्यवैधर्म्यवतोरनुमानयोः।

साधर्म्यवत् तावदुदाहरन्ननुपलब्धिमाह—

**यद्यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः सिद्धः यथा अन्यः कश्चित् दृष्टः शशविषाणादिः, नोपलभ्यते च क्वचित्प्रदेशविशेषे उपलब्धिलक्षणप्राप्तो घट इति ॥ ९ ॥**

यदित्यादिना। यत् 'उपलब्धिलक्षणप्राप्तं सत्' दृश्यं सत् 'नोपलभ्यते' इति। अनेन दृश्यानुपलम्भोऽनूद्यते। 'सोऽसद्व्यवहारस्य विषयः सिद्धः'। तत् 'असत्' इति व्यवहर्तव्यमित्यर्थः। [४४] अनेनासद्व्यवहारयोग्यत्वस्य विधिः कृतः। ततश्चासद्व्यवहारस्य योग्यत्वे दृश्यानुपलम्भो नियतः कथितः; दृश्यमनुपलब्धं असद्व्यवहारयोग्य-

मेवेत्यर्थः ॥ साधनस्य च साध्येऽर्थे नियतत्वकथनं व्याप्तिकथनम् । यथोक्तं-"व्याप्तिर्व्यापकस्य तत्र भाव एव, व्याप्यस्य च तत्रैव भावः" इति।

व्याप्तिसाधनस्य प्रमाणस्य विषयो दृष्टान्तः । तमेव दर्शयितुमाह-- यथान्य इति । साध्यधर्मिणः 'अन्यः', दृष्टान्त इत्यर्थः । 'दृष्टः' इति प्रमाणेन निश्चितः । शशविषाणं हि न चक्षुषा विषयीकृतं, अपि तु प्रमाणेन दृश्यानुपलम्भेन असद्व्यवहारयोग्यं विज्ञातम् । शशविषाणमादिर्यस्यासद्व्यवहारविषयस्य. स तथोक्तः । शशविषाणादौ हि दृश्यानुपलम्भमात्रनिमित्तोऽसद्व्यवहारः प्रमाणेन सिद्धः । तत एव प्रमाणात् अनेन वाक्येनाभिधीयमाना व्याप्तिर्ज्ञातव्या ।

संप्रति व्याप्तिं कथयित्वा दृश्यानुपलम्भस्य पक्षधर्मत्वं दर्शयितुमाह-- नोपलभ्यते चेति । 'प्रदेशः' एकदेशः पृथिव्याः; स एव विशिष्यतेऽन्यस्मादिति 'विशेषः, एकः । प्रदेशविशेषे इत्येकस्मिन्प्रदेशे । 'क्वचित्' इति प्रतिपत्तुः प्रत्यक्षे । एकोऽपि प्रदेशः, स एवाभावव्यवहाराधिकरणं यः प्रतिपत्तुः प्रत्यक्षो, नान्यः । 'उपलब्धिलक्षणप्राप्तः' इति दृश्यः । यथा चासतोऽपि घटस्य समारोपितमुपलब्धिलक्षणप्राप्तत्वं तथा व्याख्यातम् ।

स्वभावहेतोः साधर्म्यवन्तं प्रयोगं दर्शयितुमाह---

**तथा स्वभावहेतोः प्रयोगः ॥ १० ॥**

तथेति । यथा अनुपलब्धेः तथा स्वभावहेतोः साधर्म्यवान्प्रयोग इत्यर्थः ।

**यत्सत्तत्सर्वमनित्यं यथा घटादिरिति शुद्धस्य स्वभावहेतोः प्रयोगः ॥ ११ ॥**

'यत्सत्' इति सत्त्वमनूद्य 'तत्सर्वमनित्यम्' इत्यनित्यत्वं विधीयते । सर्वग्रहणं च नियमार्थम् । सर्वमनित्यं न किंचित् नानित्यं, यत्सत् तदनित्यमेव, अनित्यत्वादन्यत्र नित्यत्वे सत्त्वं नास्तीत्येवं सत्त्वमनित्यत्वे साध्ये नियतं ख्यापितं भवति । तथा च सति व्याप्तिप्रदर्शन [ ४५ ] वाक्यमिदम् । यथा घटादिरिति । व्याप्तिसाधनस्य

प्रमाणस्य विषयकथनमेतत् । 'शुद्धस्य' इति निर्विशेषणस्य स्वभावस्य प्रयोगः ।

सविशेषणं दर्शयितुमाह—

**यदुत्पत्तिमत्तदनित्यमिति स्वभावभूतधर्मभेदेन स्वभावस्य प्रयोगः ॥ १२ ॥**

यदुत्पत्तिमदिति । 'उत्पत्तिः' स्वरूपलाभो यस्यास्ति तत् उत्पत्तिमत् । उत्पत्तिमत्त्वमनूद्य 'तदनित्यम्' इत्यनित्यत्वविधिः । तथा च सति उत्पत्तिमत्त्वमनित्यत्वे नियतमाख्यातम् ।

'स्वभावभूतः' स्वभावात्मको धर्मः, तस्य 'भेदेन' भेदं हेतूकृत्य प्रयोगः । अनुत्पन्नेभ्यो हि व्यावृत्तिमाश्रित्य उत्पन्नो भाव उच्यते । सैव व्यावृत्तिः यदा व्यावृत्त्यन्तरनिरपेक्षा वक्तुमिष्यते तदा व्यतिरेकिणीव निर्दिश्यते [यथा] भावस्योत्पत्तिरिति । तया च व्यतिरिक्तयेवोत्पत्त्या विशिष्टं वस्तु उत्पत्तिमदुक्तम् । तेन स्वभावभूतेन धर्मेण कल्पितभेदेन विशिष्टः स्वभावः प्रयुक्तो द्रष्टव्यः ।

**यत्कृतकं तदनित्यमित्युपाधिभेदेन ॥ १३ ॥**

यत्कृतकमिति कृतकत्वमनूद्यानित्यत्वं विधीयत इति । अनित्यत्वे नियतं कृतकत्वमुक्तम्, अतो व्याप्तिरनित्यत्वेन कृतकत्वस्य दर्शिता । उपाधिभेदेन स्वभावस्य प्रयोग इति संबन्धः । 'उपाधिः' विशेषणम्; तस्य 'भेदेन' भिन्नेनोपाधिना विशिष्टः स्वभावः; प्रयुक्त इत्यर्थः । इह कदाचित् शुद्ध एवार्थ उच्यते, कदाचित् अव्यतिरिक्तेन विशेषणेन विशिष्टः, कदाचित् व्यतिरिक्तेन । 'देवदत्तः' इति शुद्धः, 'लम्बकर्णः' इत्यभिन्नकर्णद्वयविशिष्टः, 'चित्रगुः' इति व्यतिरिक्तचित्रगवीविशिष्टः । तद्वत् सत्त्वं शुद्धम्, उत्पत्तिमत्त्वं अव्यतिरिक्तविशेषणम्, कृतकत्वं व्यतिरिक्तविशेषणम् ।

ननु च चित्रगुशब्दे व्यतिरिक्तस्य विशेषणस्य वाचकः चित्रशब्दो गोशब्दश्चास्ति; कृतकशब्दे तु निर्विशेषणवाचिनः शब्दस्य प्रयोगोऽस्तीत्याशङ्क्याह—

**[ ४६ ] अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इति ॥ १४ ॥**

अपेक्षितेति। परेषां कारणानां व्यापारः स्वभावस्य निष्पत्तौ; निष्पत्त्यर्थम् अपेक्षितः परव्यापारो येन स तथोक्तः। हीति यस्मादर्थे। यस्मात् अपेक्षितपरव्यापारः कृतक उच्यते; तस्मात् व्यतिरिक्तेन विशेषणेन विशिष्टः स्वभाव उच्यते। यद्यपि व्यतिरिक्तं विशेषणपदं न प्रयुक्तं तथापि कृतकशब्देनैव व्यतिरिक्तं विशेषणमन्तर्भावितम्। अत एव संज्ञाप्रकारोऽयं कृतकशब्दः, यस्मात् संज्ञायामयं कन्प्रत्ययो विहितः [पा. ४, ३, १४७]। यत्र च विशेषणमन्तर्भाव्यते तत्र विशेषणपदं न प्रयुज्यते। क्वचित् प्रतीयमानं विशेषणम् यथा 'कृतः' इत्युक्ते 'हेतुभिः' इत्येतत्प्रतीयते। तत्र च हेतुशब्दः प्रयुज्यते; कदाचिन्न वा प्रयुज्यते।

प्रयुज्यमानस्वशब्दश्च यथा प्रत्ययभेदभेदिशब्दे प्रत्ययभेदः।

**एवं प्रत्ययभेदभेदित्वादयो द्रष्टव्याः ॥ १५ ॥**

यथा च कृतकशब्दो भिन्नविशेषणस्वभावाभिधायी, एवं प्रत्ययभेदभेदित्वमादिर्येषां प्रयत्नानन्तरीयकत्वादीनां तेऽपि स्वभावहेतोः प्रयोगा भिन्नविशेषणस्वभावाभिधायिनो द्रष्टव्याः। प्रत्ययानां कारणानां 'भेदो' विशेषः तेन प्रत्ययभेदेन भेत्तुं शीलं यस्य स प्रत्ययभेदभेदी शब्दः तस्य भावः 'प्रत्ययभेदभेदित्वम्'। ततः प्रत्ययभेदभेदित्वात् शब्दस्य कृतकत्वं साध्यते; प्रयत्नानन्तरीयकत्वादनित्यत्वं साध्यते। तत्र प्रत्ययभेदशब्दो व्यतिरिक्तविशेषणाभिधायी प्रत्ययभेदभेदिशब्दे प्रयुक्तः; प्रयत्नानन्तरीयकशब्दे च प्रयत्नशब्दः। तदेवं त्रिविधः स्वभावहेतुप्रयोगो दर्शितः। शुद्धः, अव्यतिरिक्तविशेषणः, व्यतिरिक्तविशेषणश्च। एवमर्थं चैतदाख्यातं — वाचकभेदात् मा भूत् कस्यचित् स्वभावहेतावपि प्रयुक्ते व्यामोह इति।

**सन्नुत्पत्तिमान्कृतको वा शब्द इति पक्षधर्मोपदर्शनम् ॥ १६ ॥**

अथ किमेते स्वभावहेतवः सिद्धसंबन्धे स्वभावे साध्ये प्रयो-

क्तव्याः, आहोस्विदसिद्धसंबन्धे इत्याशङ्क्य; सिद्धसंबन्धे प्रयोक्तव्या इति दर्शयितुमाह—

**सर्व एते साधनधर्मा यथास्वं प्रमाणैः सिद्धसाधनधर्ममात्रानुबन्धे एव साध्यधर्मेऽवगन्तव्याः ॥ १७ ॥**

[ ४७ ] सर्व एत इति । गमकत्वात्साधनानि, पराश्रितत्वाच्च धर्माः; साधनधर्मा एव साधनधर्ममात्रम् । मात्रशब्देनाधिकस्यापेक्षणीयस्य निरासः । तस्य 'अनुबन्धः' अनुगमनं अन्वयः । सिद्धः साधनधर्ममात्रानुबन्धो यस्य स तथोक्तः । केन सिद्ध इत्याह । यथास्वं प्रमाणैरिति । यस्य साध्यधर्मस्य यदात्मीयं प्रमाणं तेनैव प्रमाणेन सिद्ध इत्यर्थः । स्वभावहेतूनां च बहुभेदत्वात् संबन्धसाधनान्यपि प्रमाणानि बहूनीति 'प्रमाणैः' इति बहुवचननिर्देशः । गमयितव्यत्वात्साध्यः, पराश्रितत्वाच्च धर्मः 'साध्यधर्मः' । तदयं परमार्थः । न हेतुः प्रदीपवद्योग्यतया गमकः, अपि तु नान्तरीयकतया विनिश्चितः । साध्याविनाभावित्वनिश्चयनमेव हि हेतोः साध्यप्रतिपादनव्यापारः, नान्यः कश्चित् । प्रथमं बाधकेन प्रमाणेन साध्यप्रतिबन्धो निश्चेतव्यो हेतोः । पुनरनुमानकाले साधनं साध्यनान्तरीयकं सामान्येन स्मर्तव्यम् । 'कृतकत्वं नामानित्यत्वस्वभावम्' इति सामान्येन स्मृतमर्थं पुनर्विशेषे योजयति 'इदमपि कृतकत्वं शब्दे वर्तमानमनित्यस्वभावमेव' इति । तत्र सामान्यस्मरणं लिङ्गज्ञानम् । विशिष्टस्य तु शब्दगतकृतकत्वस्यानित्यत्वस्वभावस्य स्मरणमनुमानज्ञानम् । तथा च सति अविनाभावित्वज्ञानमेव परोक्षार्थप्रतिपादकत्वं नाम । तेन निश्चिततन्मात्रानुबन्धिसाध्यधर्मे स्वभावहेतवः प्रयोक्तव्याः, नान्यत्रेत्युक्तम् ।

यद्येवम्, संबन्धो निश्चेतव्यः साध्यस्य साधनेन सह; साधनधर्ममात्रानुबन्धस्तु साध्यस्य कस्मात् निश्चितो[ऽपि] मृग्यत इत्याह—

**तस्यैव तत्स्वभावत्वात् ॥ १८ ॥**

तस्यैवेति सिद्धसाधनधर्ममात्रानुबन्धस्य । तत्स्वभावत्वादिति साधनधर्मस्वभावत्वात् । यो हि साध्यधर्मः साधनधर्ममात्रानुबन्धवान् स एव तस्य साधनधर्मस्य स्वभावो नान्यः ।

भवत्वीदृश एव स्वभावः; स्वभावे एव तु साध्ये कस्मात् हेतुप्रयोगः ?

[४८] **स्वभावस्य च हेतुत्वात्** ॥ १९ ॥

स्वभाव इह हेतुः प्रक्रान्तः । तस्मात् स एव साध्यः कर्तव्यः यः साधनस्य स्वभावः स्यात् । साधनधर्ममात्रानुबन्धश्च स्वभावो नान्यः ।

यदि साध्यधर्मः साधनस्य स्वभावः, प्रतिज्ञार्थैकदेशः तर्हि हेतुः स्यादित्याह—

**वस्तुतस्तयोस्तादात्म्यात्** ॥ २० ॥

वस्तुत इति । 'वस्तुतः' परमार्थतः साध्यसाधनयोः तादात्म्यम् । समारोपितस्तु साध्यसाधनयोर्भेदः । साध्यसाधनभावो हि निश्चयारूढे रूपे । निश्चयारूढं च रूपं समारोपितेन भेदेन इतरव्यावृत्तिकृतेन भिन्नं इत्यन्यत्साधनं अन्यत्साध्यम् । दूराद्धि शाखादिमानर्थो वृक्ष इति निश्चीयते न शिंशपेति । अथ च स एव वृक्षः सैव शिंशपा । तस्मादभिन्नमपि वस्तु निश्चयो भिन्नमादर्शयति व्यावृत्तिभेदेन । तस्मात् निश्चयारूढरूपापेक्षया अन्यत्साधनं अन्यत्साध्यम् । अतो न प्रतिज्ञार्थैकदेशो हेतुः । वास्तवं तु तादात्म्यमिति ।

कस्मात्पुनः साधनधर्ममात्रानुबन्ध्येव साध्यः स्वभावो नान्य इत्याह—

**तन्निष्पत्तावनिष्पन्नस्य तत्स्वभावत्वाभावात्** ॥ २१ ॥

तन्निष्पत्ताविति । यो हि यन्नानुबध्नाति स तन्निष्पत्तावनिष्पन्नः । तस्य तन्निष्पत्तावनिष्पन्नस्य साधनस्वभावत्वमयुक्तम् । यतो निष्पत्त्यनिष्पत्ती भावाभावरूपे । भावाभावौ च परस्परपरिहारेण स्थितौ । यदि च पूर्वनिष्पन्नस्यानिष्पन्नस्य च ऐक्यं भवेत् , एकस्यैवार्थस्य भावाभावौ स्यातां युगपत् । न च विरुद्धयोर्भावाभावयोरैक्यं युज्यते, विरुद्धधर्मसंसर्गात्मकत्वात् एकत्वाभावस्य । किं च पश्चादुत्पद्यमानं पूर्वनिष्पन्नाद्भिन्नहेतुकम् । हेतुभेदपूर्वकश्च कार्यभेदः ।

ततो निष्पन्नानिष्पन्नयोर्विरुद्धधर्मसंसर्गात्मको भेदो भेदहेतुश्च कारण-भेद इति कुत एकत्वम् । तस्मात् साधनधर्ममात्रानुबन्ध्येव साध्यः स्वभावो नान्यः ॥

मा भूत्पश्चानिष्पन्नः पूर्वजस्य स्वभावः ; साध्यस्तु कस्मान्न भवतीत्याह— [४९]

**व्यभिचारसंभवाच्च ॥ २२ ॥**

पूर्वजेन पश्चान्निष्पन्नस्य 'व्यभिचारः' परित्यागो यः तस्य संभवाच्च । न पूर्वनिष्पन्नस्य पश्चान्निष्पन्नः साध्यः । तस्मात् साधन-धर्ममात्रानुबन्ध्येव स्वभावः । स एव च साध्यः । तथा च सिद्ध-साधनधर्ममात्रानुबन्धे एव स्वभावहेतवः प्रयोक्तव्या इति स्थितम् ।

**कार्यहेतोरपि प्रयोगः – यत्र धूमस्तत्राग्निर्यथा महानसादौ, अस्ति चेह धूम इति ॥ २३ ॥**

कार्यहेतोः प्रयोगः; साधर्म्यवानिति प्रकरणादपेक्षणीयम् । 'यत्र धूमः' इति धूममनूद्य 'तत्राग्निः' इत्यग्नेर्विधिः । तथा च नियमार्थः पूर्ववदवगन्तव्यः । तदनेन कार्यकारणभावनिमित्ता व्याप्तिर्दर्शिता । व्याप्तिसाधनप्रमाणविषयं दर्शयितुमाह । यथा महानसादाविति । महानसादौ हि प्रत्यक्षानुपलम्भाभ्यां कार्यकारणभावात्माऽविनाभावो निश्चितः; 'अस्ति चेह-' इति साध्यधर्मिणि पक्षधर्मोपसंहारः ॥

**इहापि सिद्ध एव कार्यकारणभावे कारणे साध्ये कार्यहेतुर्वक्तव्यः ॥ २४ ॥**

इहापीति । न केवलं स्वभावहेतौ इहापि कार्यहेतौ । 'सिद्ध' एवेति निश्चिते कार्यकारणत्वे । कार्यकारणत्वनिश्चयो ह्यवश्यकर्तव्यः । यतो न योग्यतया हेतुर्गमकोऽपि तु नान्तरीयकत्वादित्युक्तम् ।

साधर्म्यवान्स्वभावकार्यानुपलम्भानां प्रयोगो दर्शितः । वैधर्म्य-वन्तं दर्शयितुमाह—

[५०] **वैधर्म्यवतः प्रयोगो यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव, यथा नीलादिविशेषः; न चैवमिहोपलब्धिलक्षणप्राप्तस्य सत उपलब्धिर्घटस्येत्यनुपलब्धिप्रयोगः ॥२५॥**

वैधर्म्यवत इति। 'यत्सदुपलब्धिलक्षणप्राप्तं' इति यत्सत् दृश्यमिति अस्तित्वानुवादः। तदुपलभ्यत इति उपलम्भविधिः। तदनेन दृश्यस्य सत्त्वं दर्शनविषयत्वेन व्याप्तं कथितम्। असत्त्वनिवृत्तिश्च सत्त्वम् अनुपलम्भनिवृत्तिश्चोपलम्भः। तेन साध्यनिवृत्त्यनुवादेन साधननिवृत्तिर्विहिता। तथा च साध्यनिवृत्तिः साधननिवृत्तौ नियतत्वात् साधननिवृत्त्या व्याप्ता कथिता। यदि च धर्मिणि साध्यधर्मो न भवेत् हेतुरपि [ न भवेत् ]; हेत्वभावेन साध्याभावस्य व्याप्तत्वात्। अस्ति च हेतुः, अतो व्यापकस्य साधनाभावस्याभावात् व्याप्यस्य साध्याभावस्याभाव इति साध्यनिश्चयो भवति। ततो वैधर्म्यप्रयोगे साधनाभावे साध्याभावो नियतो दर्शनीयः सर्वत्रेति न्यायः।

स्वभावहेतोर्वैधर्म्यप्रयोगमाह--

**असत्यनित्यत्वे नास्ति सत्त्वमुत्पत्तिमत्त्वं कृतकत्वं वा; सँश्च शब्द उत्पत्तिमान्कृतको वेति स्वभावहेतोः प्रयोगः ॥ २६ ॥**

असत्यनित्यत्व इति। इहानित्यत्वस्य साध्यस्याभावो हेतोरभावे नियत उच्यते। तेन हेत्वभावेन साध्याभावो व्याप्त उक्तः त्रिष्वपि स्वभावहेतुषु। सन्नुत्पत्तिमान्कृतको वा शब्द इति त्रयाणामपि पक्षधर्मत्वप्रदर्शनम्। इह च साधनाभावस्य व्यापकस्य अभाव उक्तः। ततो व्याप्योऽपि साध्याभावो निवृत्त इति साध्यगतिः।

कार्यहेतोर्वैधर्म्यप्रयोगमाह—

**असत्यग्नौ न भवत्येव धूमः, अत्र चास्तीति कार्यहेतोः प्रयोगः ॥ २७ ॥**

असत्यग्नाविति। इहापि वह्न्यभावो धूमाभावेन व्याप्त

उक्तः । 'अस्ति चात्र धूमः' इति व्यापकस्य धूमाभावस्याभाव उक्तः । ततो व्याप्यस्य वह्न्यभावस्याभावे साध्यगतिः ।

[ ५१ ] ननु च साधर्म्यवति व्यतिरेको नोक्तः, वैधर्म्यवति चान्वयः ; तत्कथमेतत् त्रिरूपलिङ्गाख्यानमित्याह—

**साधर्म्येणापि हि प्रयोगेऽर्थाद्वैधर्म्यगतिरिति ॥ २८ ॥**

साधर्म्येणेति । साधर्म्येणाप्यभिधेयेन युक्ते प्रयोगे क्रियमाणे 'अर्थात्' इति सामर्थ्यात् 'वैधर्म्यस्य' व्यतिरेकस्य गतिर्भवति हीति यस्मात् ; तस्मात्त्रिरूपलिङ्गाख्यानमेतत् । यदि नाम व्यतिरेको ऽन्वयवति नोक्तः, तथाप्यऽन्वयवचनसमार्थ्यादेवावसीयते ।

कथम् ?

**असति तस्मिन् साध्येन हेतोरन्वयाभावात् ॥२९॥**

असति तस्मिन्व्यतिरेके बुद्ध्यध्यवसिते साध्येन हेतोरन्वयस्य बुद्ध्याऽवसितस्याभावात् । साध्ये नियतं साधनमन्वयवाक्यादवस्यता साध्याभावे साधनं नाशङ्कनीयम् । इतरथा साध्यनियतमेव न प्रतीतं स्यात् । साध्याभावे च साधनाभावगतिः व्यतिरेकगतिः । अतः साध्यनियतस्य साधनस्याभिधानसामर्थ्यादन्वयवाक्येऽवसितो व्यतिरेकः ।

**तथा वैधर्म्येणाप्यन्वयगतिः ॥ ३० ॥**

तथेति । यथाऽन्वयवाक्ये तथ अर्थादेव वैधर्म्येण प्रयोगेऽन्वयस्यानभिधीयमानस्यापि गतिः ।

कथम् ?

**असति तस्मिन् साध्याभावे हेत्वभावस्यासिद्धेः ॥३१॥**

असति तस्मिन्नन्वये बुद्धिगृहीते, साध्याभावे हेत्वभावस्य 'असिद्धेः' अनवसायात् । हेत्वभावे साध्याभावं नियतं व्यतिरेकवाक्यादवस्यता हेतुसंभवे साध्याभावो नाशङ्कनीयः । इतरथा हेत्वभावे नियतः साध्याभावो न स्यात्प्रतीतः । हेतुसत्त्वे च साध्यसत्त्वगतिः 'अन्वयगतिः'। अतः साधनाभावनियतस्य साध्याभावस्याभिधानसामर्थ्यात् व्यतिरेकवाक्येऽन्वयगतिः ।

यदि नामाकाशादौ साध्याभावे साधनाभावः, तथापि किमिति हेतुसंभवे साध्यसंभव इत्याह—

[५२] **न हि स्वभावप्रतिबन्धेऽसत्येकस्य निवृत्तावपरस्य नियमेन निवृत्तिः ॥ ३२ ॥**

नहीति । स्वभावेन प्रतिबन्धो यः तस्मिन्नसति एकस्य साध्यस्य निवृत्त्या नापरस्य साधनस्य 'नियमेन' युक्ता नियमवती निवृत्तिः ।

**स च द्विप्रकारः सर्वस्य, तादात्म्यलक्षणस्तदुत्पत्तिलक्षणश्चेत्युक्तम् ॥ ३३ ॥**

स च स्वभावप्रतिबन्धो द्विप्रकारः सर्वस्य प्रतिबद्धस्य । तादात्म्यं 'लक्षणं' निमित्तं यस्य स तथोक्तः । तदुत्पत्तिः लक्षणं निमित्तं यस्य स तथोक्तः । यो यत्र प्रतिबद्धः तस्य स प्रतिबन्धविषयोऽर्थः स्वभावः कारणं वा स्यात् । अन्यस्मिन् प्रतिबद्धत्वानुपपत्तेः । तस्माद्द्विप्रकारः स इति उक्तं 'स च साध्येऽर्थे लिङ्गस्य' इत्यत्रान्तरेऽभिहितम् ।

**तेन हि निवृत्तिं कथयता प्रतिबन्धो दर्शनीयः । तस्मान्निवृत्तिवचनमाक्षिप्तप्रतिबन्धोपदर्शनमेव भवति । यच्च प्रतिबन्धोपदर्शनं तदेवान्वयवचनमित्येकेनापि वाक्येनान्वयमुखेन व्यतिरेकमुखेन वा प्रयुक्तेन सपक्षासपक्षयोर्लिङ्गस्य सदसत्त्वख्यापनं कृतं भवतीति नावश्यं वाक्यद्वयप्रयोगः ॥ ३४ ॥**

हिर्यस्मादर्थे । यस्मात् स्वभावप्रतिबन्धे निवर्त्यनिवर्तकभावः, तेन साध्यस्य निवृत्तौ साधनस्य निवृत्तिं कथयता प्रतिबन्धो निवर्त्यनिवर्तकयोः दर्शनीयः । यदि हि साधनं साध्ये प्रतिबद्धं भवेत्, एवं साध्यनिवृत्तौ तत् नियमेन निवर्तेत । यतश्च तस्य प्रतिबन्धो दर्शनीयः तस्मात् साध्यनिवृत्तौ यत्साधननिवृत्तिवचनं तेनाक्षिप्तं प्रतिबन्धोपदर्शनम् । यच्च तदाक्षिप्तप्रतिबन्धोपदर्शनं तदेवान्वयवचनम् ।

प्रतिबन्धश्चेदवश्यं दर्शयितव्यः, न वक्तव्यस्तर्ह्यन्वयः । यस्मात् दृष्टान्ते प्रमाणेन प्रतिबन्धो दर्श्यमान एवान्वयो नापरः कश्चित्, तस्मान्निवर्त्यनिवर्तकयोः प्रतिबन्धो ज्ञातव्यः । तथा चान्वय एव ज्ञातो भवति । इतिशब्दो हेतौ । यस्मादन्वये व्यतिरेकगतिर्व्यतिरेके चान्वयगतिः, तस्मादेकेनापि सपक्षे चास[ ५३ ]पक्षे च सत्त्वासत्त्वयोः ख्यापनं कृतम् । अन्वयो 'मुखं' उपायोऽभिधेयत्वाद्यस्य तदन्वयमुखं वाक्यम् । एवं व्यतिरेको मुखं यस्येति । इतिः हेतौ । यस्मादेकेनापि वाक्येन द्वयगतिः तस्मादेकस्मिन्साधनवाक्ये द्वयोरन्वयव्यतिरेकवाक्ययोरवश्यमेव प्रयोगो न कर्तव्यः । अर्थगत्यर्थो हि शब्दप्रयोगः । अर्थश्चेदवगतः किं शब्दप्रयोगेण । एकमेव त्वन्वयवाक्यं व्यतिरेकवाक्यं वा प्रयोक्तव्यम् ।

**अनुपलब्धावपि – यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एवेत्युक्तेऽनुपलभ्यमानं तादृशमसदिति प्रतीतेरन्वयसिद्धिः ॥ ३५ ॥**

अनुपलब्धावपि व्यतिरेकेणोक्तेनान्वयगतिः । 'यत्सदुपलब्धिलक्षणप्राप्तं' इति साध्यस्यासद्व्यवहारयोग्यत्वस्य निवृत्तिं दृश्यसत्त्वरूपामाह । 'तदुपलभ्यत एव' इति अनुपलम्भस्य निवृत्तिमुपलम्भरूपामाह । तदनेन साध्यनिवृत्तिः साधननिवृत्त्या व्याप्ता दर्शिता । यदि च साधनसंभवेऽपि साध्यनिवृत्तिर्भवेत्, न साधनाभावेन व्याप्ता भवेत् । अतो व्याप्तिं प्रतिपद्यमानेन साधनसंभवः साध्यसंभवेन व्याप्तः प्रतिपत्तव्यः । अत एवाह – अनुपलभ्यमानं 'तादृशं' इति दृश्यं असदिति 'प्रतीतेः' संप्रत्ययात् अन्वयसिद्धिरिति ।

**द्वयोरप्यनयोः प्रयोगे नावश्यं पक्षनिर्देशः ॥ ३६ ॥**

यतश्च साधनं साध्यधर्मप्रतिबद्धं तादात्म्यतदुत्पत्तिभ्यां प्रतिपत्तव्यं द्वयोरपि प्रयोगयोः, तस्मात् पक्षोऽवश्यमेव न निर्देश्यः । यत्साधनं साध्यनियतं प्रतीतं तत एव साध्यधर्मिणि दृष्टात् साध्यप्रतीतिः, अतो न किंचित् साध्यनिर्देशेनेति ।

एतमेवार्थमनुपलब्धिप्रयोगे दर्शयति ।

**अत्र साधर्म्यवत्प्रयोगेऽपि – यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः, नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तो घट इत्युक्ते सामर्थ्यादेव नेह घट इति भवति ॥ ३७ ॥**

साधर्म्यवति प्रयोगेऽपि सामर्थ्यादेव 'नेह घटः' इति भवति। किं पुनस्तत्सामर्थ्यमित्याह । यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते इति अनुपलम्भानुवादः । [५४] सोऽसद्व्यवहारविषय इत्यसद्व्यवहार-योग्यत्वविधिः । तथा च सति दृश्यानुपलम्भोऽसद्व्यवहारयोग्यत्वेन व्याप्तो दर्शितः । नोपलभ्यत इत्यादिना साध्यधर्मिणि सत्त्वं लिङ्गस्य दर्शितम् । यदि च साध्यधर्मस्तत्र साध्यधर्मिणि न भवेत् साधनधर्मोऽपि न भवेत्, साध्यनियतत्वात् तस्य साधनधर्मस्येति 'सामर्थ्यम्' ।

**तथा वैधर्म्यवत्प्रयोगेऽपि – यः सद्व्यवहारविषय उपलब्धिलक्षणप्राप्तः स उपलभ्यत एव; न तथात्र तादृशो घट उपलभ्यत इत्युक्ते सामर्थ्या-देव नेह सद्व्यवहारविषय इति भवति ॥ ३८ ॥**

यथा साधर्म्यवत्प्रयोगे तथा वैधर्म्यवत्प्रयोगेऽपि सामर्थ्यादेव 'नेह सद्व्यवहारविषयोऽस्ति घटः' इति भवति । सामर्थ्यं दर्शयितु-माह । यः सद्व्यवहारविषय इति विद्यमानः । उपलब्धिलक्षणप्राप्त इति दृश्यः । इत्येषा साध्यनिवृत्तिः । स उपलभ्यत एवेति साधन-निवृत्तिरिति । अनेन च साध्यनिवृत्तिः साधननिवृत्त्या व्याप्ता दर्शिता । न तथेति । यथाऽन्यो दृश्य उपलभ्यते न तथाऽत्र प्रदेशे 'तादृशः' इति दृश्यो घट उपलभ्यते इत्यनेन साध्यनिवृत्तेर्व्यापिका साधन-निवृत्तिरसति साध्यधर्मिणि दर्शिता ।

यदि च न साध्यधर्मः साध्यधर्मिणि भवेत् साधनधर्मोऽपि न भवेत् अस्ति च साधनधर्म इति 'सामर्थ्यात्' । ततः सामर्थ्यात् 'नास्त्यत्र घटः' इति प्रतीतेर्न पक्षनिर्देशः । एवं कार्यस्वभावहेत्वो-रपि सामर्थ्यात् संप्रत्यय इति न पक्षनिर्देशः ।

**कीदृशः पुनः पक्ष इति निर्देश्यः ॥ ३९ ॥**

कीदृशः पुनरर्थः पक्ष इत्यनेन शब्देन 'निर्देश्यः' वक्तव्य इति। आह—

**स्वरूपेणैव स्वयमिष्टोऽनिराकृतः पक्ष इति ॥४०॥**

स्वरूपेणैवेति साध्यत्वेनैव । स्वयमिति वादिना । इष्ट इति नोक्त एवापि त्विष्टोऽपीत्यर्थः । एवंभूतः सन् प्रत्यक्षादिभिरनिराकृतो यो ऽर्थः स पक्ष इत्युच्यते ॥ अथ यदि न [५५] पक्षो निर्देश्यः, कथमनिर्देश्यस्य लक्षणमुक्तम् ? न साधनवाक्यावयवत्वादस्य लक्षणमुक्तम् अपि त्वसाध्यं केचित्साध्यं साध्यं चासाध्यं प्रतिपन्नाः । तत् साध्यासाध्यविप्रतिपत्तिनिराकरणार्थं पक्षलक्षणमुक्तम् ।

स्वरूपेणेष्ट इत्यस्य विवरणं--

**स्वरूपेणेति साध्यत्वेनेष्टः ॥ ४१ ॥**

साध्यत्वेनेष्ट इति । पक्षस्य साध्यत्वात् नापरमस्ति रूपम् । अतः स्वरूपं साध्यत्वमिति ।

एवशब्दं विवरीतुमाह---

**स्वरूपेणैवेति साध्यत्वेनेष्टो न साधनत्वेनापि ॥४२॥**

स्वरूपेणैवेति ॥ ननु चैवशब्दः केवल एव प्रत्यवमर्ष्टव्यः, तत्किमर्थं स्वरूपशब्देन सह प्रत्यवमृष्टः । उच्यते । एवशब्दो निपातो द्योतकः । पदान्तराभिहितस्यार्थस्य विशेषं द्योतयतीति पदान्तरेण विशेष्यवाचिना सह निर्दिष्टः । न साधनत्वेनापीति । यत् साधनत्वेन निर्दिष्टं तत् साधनत्वेनेष्टम्, असिद्धत्वाच्च साध्यत्वेनापीष्टं; तस्य निवृत्त्यर्थ एवशब्दः ।

तदुदाहरति--

**यथा शब्दस्यानित्यत्वे साध्ये चाक्षुषत्वं हेतुः शब्देऽसिद्धत्वात्साध्यं न पुनस्तदिह साध्यत्वेनैवेष्टं साधनत्वेनाप्यभिधानात् ॥ ४३**

यथेति । शब्दस्यानित्यत्वे साध्ये चाक्षुषत्वं हेतुः । शब्दे-

सिद्धत्वात्साध्यमित्यनेन साध्यत्वेनेष्टिमाह । तदिति चाक्षुषत्वम् इहेति शब्दे । न साध्यत्वनैवेष्टमिति साध्यत्वेनेष्टिनियमाभावमाह । साधनत्वेनाभिधानादिति । यतः साधनत्वेनाभिहितमतः साधनत्वेनापीष्टं, न साध्यत्वेनैवेति ।

[५६] **स्वयमिति वादिना । ॥ ४४ ॥**

स्वयमित्यनेन स्वयंशब्दं व्याख्येयमुपक्षिप्य तस्यार्थमाह । वादिनेति । स्वयंशब्दो निपातः, आत्मन इति षष्ठ्यन्तस्यात्मनेति च तृतीयान्तस्यार्थे वर्तते । तदिह तृतीयान्तस्यात्मशब्दस्यार्थे वृत्तः स्वयंशब्दः । आत्मशब्दश्च संबन्धिशब्दः । वादी च प्रत्यासन्नः । ततो यस्य वादिन आत्मा तृतीयार्थयुक्तः स एव तृतीयार्थयुक्तो निर्दिष्टो वादिनेति । न तु स्वयंशब्दस्य वादिनेत्येष पर्यायः ।

कः पुनरसौ वादीत्याह—

**यस्तदा साधनमाह ॥ ४५ ॥**

यस्तदेति वादकाले साधनमाह । अनेकवादिसंभवेऽपि स्वयंशब्दवाच्यस्य वादिनो विशेषणमेतत् । यद्येवं, वादिन इष्टः साध्य इत्युक्तम् । एतेन च किमुक्तेन ? अनेन 'तदा' वादकाले तेन वादिना स्वयं यो धर्मः साधयितुमिष्टः, स एव साध्यः, नेतर इत्युक्तं भवति । वादिनोऽनिष्टधर्मसाध्यत्वनिवर्तनमस्य वचनस्य फलमिति यावत् ।

अथ कस्मिन्सति अन्यधर्मसाध्यत्वस्य संभवो यन्निवृत्त्यर्थं चेदं वक्तव्यमित्याह—

**एतेन – यद्यपि क्वचिच्छास्त्रे स्थितः साधनमाह, तच्छास्त्रकारेण तस्मिन्धर्मिण्यनेकधर्माभ्युपगमेऽपि यस्तदा तेन वादिना धर्मः स्वयं साधयितुमिष्टः स एव साध्यो नेतर इत्युक्तं भवति ॥ ४६ ॥**

तच्छास्त्रकारेणेति । यत् शास्त्रं तेन वादिनाऽभ्युपगतं 'तच्छास्त्रकारेण' तस्मिन्साध्यधर्मिणि अनेकस्य धर्मस्याभ्युपगमे

सति अन्यधर्मसाध्यत्वसंभवः । तथा हि । शास्त्रं येनाभ्युपगतं तत्सिद्धो धर्मः सर्व एव तेन साध्य इत्यस्ति विप्रतिपत्तिः । [सा] अनेनापास्यते ; अनेकधर्माभ्युपगमेऽपि सति स एव साध्यो यो वादिन इष्टो नान्य इति ।

ननु च शास्त्रानपेक्षं वस्तुबलप्रवृत्तं लिङ्गम् । अतोऽनपेक्षणीयत्वान्न शास्त्रे स्थित्वा वादः कर्तव्यः । सत्यम् । आहोपुरुषिकया तु यद्यपि 'क्वचिच्छास्त्रे स्थितः' इति किंचिच्छास्त्रमभ्युपगतः साधनमाह; तथापि य एव तस्येष्टः स एव साध्य इति ज्ञापनायेदमुक्तम् ।

**[५७] इष्ट इति, यत्रार्थे विवादेन साधनमुपन्यस्तं तस्य सिद्धिमिच्छता सोऽनुक्तोऽपि वचनेन साध्यः ॥ ४७ ॥**

इष्ट इति । इष्टशब्दमुपक्षिप्य व्याचष्टे । 'यत्रार्थे' आत्मनि ['विवादः'] विरुद्धो वादः प्रक्रान्तो 'नास्त्यात्मा' इत्यात्मप्रतिषेधवादः आत्मसत्तावादविरुद्धः; विधिप्रतिषेधयोर्विरोधात् । तेन विवादेन हेतुना साधनमुपन्यस्तम् । 'तस्य' आत्मार्थस्य 'सिद्धिं' निश्चयमिच्छता वादिना सोऽर्थः साध्य इत्युक्तं भवति इष्टशब्देन । यत्तत् 'इत्युक्तं भवति' इतिग्रहणमन्ते, तदिहापेक्ष्य वाक्यं परिसमापयितव्यम् । यद्यपि परार्थानुमाने उक्त एव साध्यो युक्तः, 'अनुक्तोऽपि तु वचनेन साध्यः'; सामर्थ्योक्तत्वात्तस्य ।

कुत एतदित्याह—

**तदधिकरणत्वाद्विवादस्य ॥ ४८ ॥**

तदित्यादि । तदिति । सः 'अधिकरणं' आश्रयो यस्य स तदधिकरणो विवादः तस्य भावस्तत्त्वं तस्मादिति । एतदुक्तं भवति । यस्मात् विवादं निराकर्तुमिच्छता वादिना साधनमुपन्यस्तं तस्मात् यत् अधिकरणं विवादस्य तदेव साध्यम्; यतो विरुद्धं वादमपनेतुं साधनमुपन्यस्तम् । तच्चेन्न साध्यं, किमिदानीं जगति नियतं किंचित् साध्यं स्यादिति ?

अनुक्तमपि परार्थानुमाने साध्यमिष्टम् । तदुदाहरति—

**यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनाद्यङ्गवदिति । अत्रात्मार्था इत्यनुक्तावप्यात्मार्थता । तेन नोक्तमात्रमेव साध्यमित्युक्तं भवति ॥ ४९ ॥**

परार्था इति । चक्षुरादिर्येषां श्रोत्रादीनां ते चक्षुरादय इति धर्मी । परस्मायिमे परार्था इति साध्यम् पारार्थ्यम् । संघातत्वादिति हेतुः । व्याप्तिविषयप्रदर्शनं – शयनासद्याङ्गवदिति । शयनमासनं च ते आदी यस्य तच्छयनासनादि पुरुषोपभोगाङ्गं संघातरूपम् । [ ५८ ] तद्वदत्र प्रमाणे यदप्यात्मार्थाश्चक्षुरादय इत्यात्मार्थता नोक्ताः अनुक्ताऽप्यात्मार्थता साध्या । तथा हि । साङ्ख्येनोक्तं 'अस्त्यात्मा' । तद्विरुद्धं बौद्धेनोक्तं 'नास्त्यात्मा' इति । ततः साङ्ख्येन स्ववादविरुद्धं बौद्धवादं हेतूकृत्य विरुद्धवादनिराकरणाय स्ववादप्रतिष्ठापनाय च साधनमुपन्यस्तम् । अतोऽनुक्ताप्यात्मार्थता साध्या तदधिकरणत्वाद्विवादस्य । शयनासनादिषु हि पुरुषोपभोगाङ्गेष्वात्मार्थत्वेनान्वयो न प्रसिद्धः ; संघातत्वस्य परार्थ[त्व]मात्रेण तु सिद्धः । ततः परार्था इत्युक्तम् । चक्षुरादय इत्यत्रादिग्रहणाद्विज्ञानमपि परार्थं साधयितुमिष्टम् । विज्ञानाच्च पर आत्मैव स्यात् । परस्यार्थकारि विज्ञानं सेत्स्यतीति सामर्थ्यादात्मार्थत्वं सिध्यति चक्षुरादीनामिति मत्वा परार्थग्रहणं कृतम् । 'तेन' इष्टसाध्यवचनेन 'नोक्तमात्रं' अपि तु प्रतिवादिनो विवादास्पदत्वाद्वादिनः साधयितुमिष्टं उक्तमनुक्तं वा प्रकरणगम्यं 'साध्यमित्युक्तं भवति' ।

**अनिराकृत इति एतल्लक्षणयोगेऽपि यः साधयितुमिष्टोऽप्यर्थः प्रत्यक्षानुमानप्रतीतिस्ववचनैर्निराक्रियते न स पक्ष इति प्रदर्शनार्थम् ॥ ५० ॥**

अनिराकृत इति व्याख्येयम् । 'एतत्' इत्यनन्तरप्रक्रान्तं यत् पक्षलक्षणमुक्तं साध्यत्वेनेष्टेत्यादि । एतल्लक्षणेन योगेऽप्यर्थो न पक्ष इति 'प्रदर्शनार्थं' प्रदर्शनाय अनिराकृतग्रहणं कृतम् । कीदृशोऽर्थो न पक्षः साधयितुमिष्टोऽपीत्याह । यः साधयितुमिष्टोऽर्थः

प्रत्यक्षं चानुमानं च प्रतीतिश्च स्ववचनं च, तैः 'निराक्रियते' विपरीतः साध्यते न स पक्ष इति ।

**तत्र प्रत्यक्षनिराकृतो यथा - अश्रावणः शब्द इति। ५१**

तत्रेति तेषु चतुर्षु प्रत्यक्षादिनिराकृतेषु । प्रत्यक्षनिराकृतः कीदृशः । यथेति । यथायं प्रत्यक्षनिराकृतः तथान्येऽपि द्रष्टव्या इति यथाशब्दार्थः । श्रवणेन ग्राह्यः श्रावणः, न श्रावणः 'अश्रावणः'; श्रोत्रेण न ग्राह्य इति प्रतिज्ञार्थः । श्रोत्राग्राह्यत्वं शब्दस्य प्रत्यक्षसिद्धेन श्रोत्रग्राह्यत्वेन बाध्यते ।

[५९] **अनुमाननिराकृतो यथा - नित्यः शब्द इति ।५२।**

अनुमाननिराकृतः । नित्यः शब्द इति शब्दस्य प्रतिज्ञातं नित्यत्वं अनित्यत्वेनानुमानसिद्धेन निराक्रियते ।

**प्रतीतिनिराकृतो यथा - अचन्द्रः शशीति ॥ ५३ ॥**

प्रतीत्या निराकृतः । अचन्द्र इति । चन्द्रशब्दवाच्यो न भवति शशीति प्रतिज्ञातार्थः । अयं च प्रतीत्या निराकृतः । प्रतीतोऽर्थ उच्यते विकल्पविज्ञानविषयः । 'प्रतीतिः' प्रतीतत्वं विकल्पविज्ञानविषयत्वमुच्यते । तेन विकल्पविज्ञानविषयत्वेन प्रतीतिरूपेण शशिनश्चन्द्रशब्दवाच्यत्वं सिद्धमेव । तथा हि । यत् विकल्पज्ञानग्राह्यं तत् शब्दाकारसंसर्गयोग्यम् । [ यच्च शब्दाकारसंसर्गयोग्यं ] तत् सांकेतिकेन शब्देन वक्तुं शक्यम् । अतः प्रतीतिरूपेण विकल्पविज्ञानविषयत्वेन सिद्धं चन्द्रशब्दवाच्यत्वमचन्द्रत्वस्य बाधकं द्रष्टव्यम् । स्वभावहेतुश्च प्रतीतिः । यस्मात् विकल्पविषयत्वमात्रानुबन्धिनि सांकेतिकशब्दवाच्यता; ततः स्वभावहेतुसिद्धं चन्द्रशब्दवाच्यत्वमवाच्यत्वस्य बाधकं द्रष्टव्यम् ।

**स्ववचननिराकृतो यथा - नानुमानं प्रमाणम् ॥ ५४ ॥**

'स्ववचनं' प्रतिज्ञार्थस्यात्मीयो वाचकः शब्दस्तेन निराकृतः प्रतिज्ञार्थो न साध्यः । यथा — नानुमानं प्रमाणम् । अत्रानुमानस्य प्रामाण्यनिषेधः प्रतिज्ञार्थः । स 'नानुमानं प्रमाणं' इत्यनेन स्ववाच-

केन वाक्येन बाध्यते। वाक्यं ह्येतत् प्रयुज्यमानं वक्तुः शाब्दस्य प्रत्ययस्य सदर्थत्वमिष्टं सूचयति। तथाहि। मद्वाक्याद्योऽर्थसंप्रत्ययः तवोत्पद्यते सोऽसत्यार्थ इति दर्शयन् वाक्यमेव नोच्चारयेद्वक्ता। वचनार्थश्चेदसत्यः परेण ज्ञातव्यः, वचनमपार्थकम्। "योऽपि हि 'सर्वं मिथ्या ब्रवीमि' इति वक्ति सोऽप्यस्य वाक्यस्य सत्यार्थत्वमादर्शयन्नेव वाक्यमुच्चारयति"। यद्येतद्वाक्यं सत्यार्थमादर्शितम्, एवं वाक्यान्तराण्यात्मीयान्य [ ६० ] सत्यार्थानि दर्शितानि भवन्ति। एतदेव तु यद्यसत्यार्थम्, अन्यान्यसत्यार्थानि न दर्शितानि भवन्ति। ततश्च न किंचिदुच्चारणस्य फलमिति नोच्चारयेत्। तस्माद्वाक्यप्रभवं वाक्यार्थालम्बनं विज्ञानं सत्यार्थं दर्शयन्नेव वक्ता वाक्यमुच्चारयति। तथा च सति बाह्यवस्तुनान्तरीयकं शब्दं दर्शयता शब्दजं विज्ञानं सत्यार्थं दर्शयितव्यम्। ततो बाह्यार्थकार्याच्छब्दादुत्पन्नं विज्ञानं सत्यार्थमादर्शयता कार्यलिङ्गजमनुमानं प्रमाणं शाब्दं दर्शितं भवति। तस्मात् 'नानुमानं प्रमाणम्' इति ब्रुवता शाब्दस्य प्रत्ययस्य असन् ग्राह्य उक्तः। असदर्थत्वमेव ह्यप्रामाण्यमुच्यते; नान्यत्। शब्दोच्चारणसामर्थ्याच्चार्थाविनाभावी स्वशब्दो दर्शितः। तथा च सन्नर्थो दर्शितः। ततः कल्पितादर्थकार्याच्छब्दात् शाब्दप्रत्ययार्थस्यानुमितं सत्त्वं प्रतिज्ञायमानं असत्त्वं प्रतिबध्नाति। तदेवं स्ववचनानुमितेन सत्त्वेनासत्त्वं वाच्यमानं स्ववचनेन बाधितमुक्तमित्ययमत्रार्थः।

अन्ये त्वाहुः। अभिप्रायकार्याच्छब्दात् जातं ज्ञानमभिप्रायालम्बनं सदर्थमिच्छतः शब्दप्रयोगः। तेनाप्रामाण्यं प्रतिज्ञातं बाध्यत इति। तदयुक्तम्। यत इह प्रतीतेः स्वभावहेतुत्वं स्ववचनस्य च कार्यहेतुत्वं कल्पितमिष्टम्; न वास्तवम्। अभिप्रायकार्यत्वं च वास्तवमेव शब्दस्य। ततस्तदिह न गृह्यते। किं च यथाऽनुमानमनिच्छन् वह्न्यव्यभिचारित्वं धूमस्य न प्रत्येति; तथा शब्दस्याप्यभिप्रायाव्यभिचारित्वं न प्रत्येष्यति। बाह्यवस्तुप्रत्यायनाय च शब्दः प्रयुज्यते। तन्न शब्दस्याभिप्रायाविनाभावित्वाभ्युपगमपूर्वकः शब्दप्रयोगः। अपि च न स्वाभिप्रायनिवेदनाय शब्द उच्चार्यते, अपि

तु बाह्यवस्तुसत्त्वप्रतिपादनाय । तस्माद्बाह्यवस्त्वविनाभावित्वाभ्युपगमपूर्वकः शब्दप्रयोगः । ततः पूर्वकमेव व्याख्यानमनवद्यम् ।

**इति चत्वारः पक्षाभासा निराकृता भवन्ति ॥ ५५ ॥**

['इति'] एवं सति अनिराकृतग्रहणेन अनन्तरोक्ताश्चत्वारः पक्षवदाभासन्त इति 'पक्षाभासाः' निरस्ता भवन्ति ।

संप्रति पक्षलक्षणपदानि येषां व्यवच्छेदकानि तेषां व्यवच्छेदेन यादृशः पक्षार्थो लभ्यते तं दर्शयितुं व्यवच्छेद्यान् संक्षिप्य दर्शयति---

[६१] **एवं सिद्धस्यासिद्धस्यापि साधनत्वेनाभिमतस्य स्वयं वादिना तदा साधयितुमनिष्टस्योक्तमात्रस्य निराकृतस्य च विपर्ययेण साध्यः तेनैव स्वरूपेणाभिमतो वादिन इष्टोऽनिराकृतः पक्ष इति पक्षलक्षणमनवद्यं दर्शितं भवति ॥ ५६ ॥**

एवमित्यनन्तरोक्तक्रमेण सिद्धस्य 'विपर्ययेण' विपरीतत्वेन हेतुना साध्यो द्रष्टव्यः । यस्मादर्थात् सिद्धोऽर्थो विपरीतः, स साध्य इत्यर्थः । सिद्धश्च विपरीतोऽसिद्धस्य । तस्मात् 'असिद्धः' साध्यः । असिद्धोऽपि न सर्वः अपि तु साधनत्वेनोक्तस्यासिद्धस्यापि विपर्ययेण, स्वयं वादिना साधयितुमनिष्टस्यासिद्धस्य विपर्ययेण, तथा उक्तमात्रस्यासिद्धस्यापि विपर्ययेण, तथा निराकृतस्यासिद्धस्यापि विपर्ययेण साध्यः । यश्चायं पञ्चभिर्व्यवच्छेदै रहितोऽर्थः असिद्धः असाधनं वादिनः स्वयं साधयितुमिष्टः उक्तोऽनुक्तो वा प्रमाणैरनिराकृतः साध्यः । स एवासौ 'स्वरूपेणैव स्वयमिष्टो ऽनिराकृतः' एतैः पदैरुक्त इत्यर्थः । यश्चायं साध्यः स 'पक्षः' उच्यते । इतिशब्द एवमर्थे; एवं पक्षलक्षणमनवद्यमिति । अविद्यमानं 'अवद्यं' दोषो यस्य तत् 'अनवद्यम्' । 'दर्शितं' कथितम् ।

त्रिरूपलिङ्गाख्यानं परिसमाप्य प्रसङ्गागतं च पक्षलक्षणमभिधाय हेत्वाभासान्वक्तुकामस्तेषां प्रस्तावं रचयति—

**त्रिरूपलिङ्गाख्यानं परार्थानुमानमित्युक्तम् । तत्र त्रयाणां रूपाणामेकस्यापि रूपस्यानुक्तौ साधनाभासः ॥ ५७ ॥**

त्रिरूपेत्यादिना । एतदुक्तं भवति । त्रिरूपलिङ्गाख्यानं वक्तुकामेन स्फुटं तद्वक्तव्यम् । एवं च तत् स्फुटमुक्तं भवति यदि तच्च तत्प्रतिरूपकं चोच्यते । हेयज्ञाने हि [ सति ] तद्विविक्तमुपादेयं सुज्ञातं भवतीति । त्रिरूपलिङ्गाख्यानं परार्थानुमानमिति प्रागुक्तम् । तत्रेति तस्मिन्सति । त्रिरूपलिङ्गाख्याने परार्थानुमाने सतीत्यर्थः । त्रयाणां रूपाणां मध्ये एकस्याप्य [ ६२ ] नुक्तौ; अपिशब्दाद्द्वयोरपि । [' साधनाभासः '] साधनस्याभासः, सदृशं साधनस्य न साधनमित्यर्थः । त्रयाणां रूपाणां न्यूनता नाम साधनदोषः ।

**उक्तावप्यसिद्धौ संदेहे वा प्रतिपाद्यप्रतिपादकयोः ।५८**

न केवलमनुक्तौ उक्तावप्यसिद्धौ संदेहे वा । कस्येत्याह । 'प्रतिपाद्यस्य' प्रतिवादिनः 'प्रतिपादकस्य' च वादिनः हेत्वाभासः ।

अथ कस्य रूपस्यासिद्धौ संदेहे वा किंसंज्ञको हेत्वाभास इत्याह–

**एकस्य रूपस्य धर्मिसंबन्धस्यासिद्धौ संदेहे वाऽसिद्धो हेत्वाभासः ॥ ५९ ॥**

एकस्य रूपस्येति । धर्मिणा सह सम्बन्धः ' धर्मिसंबन्धः ' । धर्मिणि सत्त्वं हेतोः । तस्यासिद्धौ संदेहे वा असिद्धसंज्ञको हेत्वाभासः । असिद्धत्वादेव च धर्मिण्यप्रतिपत्तिहेतुः न साध्यस्य न विरुद्धस्य न संशयस्य हेतुरपि त्वप्रतिपत्तिहेतुः, कस्याचिदतः प्रतिपत्तिरिति कृत्वा । अयं चार्थो ऽसिद्धसंज्ञाकरणादेव प्रतिपत्तव्यः ।

उदाहरणमाह—

**यथा – अनित्यः शब्द इति साध्ये चाक्षुषत्वमुभयासिद्धम् ॥ ६० ॥**

यथेत्यादि । ' अनित्यः शब्दः ' इत्यनित्यत्वविशिष्टे शब्दे

साध्ये 'चाक्षुषत्वं' चक्षुर्ग्राह्यत्वं शब्दे द्वयोरपि वादिप्रतिवादिनोरसिद्धम् ।

**चेतनास्तरव इति साध्ये सर्वत्वगपहरणे मरणं प्रतिवाद्यसिद्धं विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्तस्य च तरुष्वसंभवात् ॥ ६१ ॥**

चेतनास्तरव इति तरूणां चैतन्ये साध्ये सर्वा त्वक् 'सर्वत्वक्' तस्या अपहरणे सति मरणं दिगम्बरैरुपन्यस्तं प्रतिवादिनो बौद्धस्यासिद्धम् । कस्मादसिद्धमित्याह । [ ६३ ] विज्ञानं चेन्द्रियं चायुश्च । तत्र 'विज्ञानं' चक्षुरादिजनितम् । रूपादिविज्ञानोत्पत्त्या यदनुमितं कायान्तर्भूतं चक्षुर्गोलकादिस्थितरूपं तत् 'इन्द्रियम्' । 'आयुः' इति लोके प्राणा उच्यन्ते । न चागमसिद्धमिह युज्यते वक्तुम् । अतः प्राणस्वभावमायुरिह । तेषां 'निरोधः' निवृत्तिः । स 'लक्षणं' तत्त्वं यस्य तत्तथोक्तम् । तथाभूतस्य मरणस्यानेन बौद्धेन प्रतिज्ञातत्वात् । यदि नामैवं, तथापि कथमसिद्धमित्याह । 'तस्य च' विज्ञानादिनिरोधात्मकस्य तरुष्वसंभवात् । सत्तापूर्वको निरोधः । ततश्च यो विज्ञाननिरोधं तरुष्विच्छेत् स कथं विज्ञानं नेच्छेत् । तस्मात् विज्ञानानिष्टेः निरोधोऽपि नेष्टस्तरुषु । ननु च शोषोऽपि मरणमुच्यते; स च तरुषु सिद्धः । सत्यम् । केवलं विज्ञानसत्तया व्याप्तं यन्मरणं तदिह हेतुः – विज्ञाननिरोधश्च तत्सत्तया व्याप्तो [यतः], – न शोषमात्रम् । ततो यन्मरणहेतुः तत्तरुष्वसिद्धम्; यत्तु सिद्धं शोषात्मकं तदहेतुः । दिगम्बरस्तु साध्येन व्याप्तमव्याप्तं वा मरणमविविच्य मरणमात्रं हेतुमाह । तदस्य वादिनो हेतुभूतं मरणं न ज्ञातम् । अज्ञानात्सिद्धं शोषरूपम्, शोषरूपस्य मरणस्य तरुषु दर्शनात् । प्रतिवादिनस्तु ज्ञातमतोऽसिद्धम् । यदा तु वादिनोऽपि ज्ञातं तदा वादिनोऽप्यसिद्धं स्यादिति न्यायः ।

**अचेतनाः सुखादय इति साध्ये उत्पत्तिमत्त्वमनित्यं वा साङ्ख्यस्य स्वयं वादिनोऽसिद्धम् । ६२ ।**

अचेतनाः सुखादय इति । सुखमादिर्येषां दुःखादीनां ते

सुखादयः। तेषामचैतन्ये साध्ये उत्पत्तिमत्त्वमनित्यत्वं वा लिङ्गमुपन्यस्तम्। ये उत्पत्तिमन्तोऽनित्या वा ते न चेतना यथा रूपादयः। तथा चोत्पत्तिमन्तोऽनित्या वा सुखादयः तस्मादचेतनाः। चैतन्यं तु पुरुषस्य स्वं रूपम्। अत्र चोत्पत्तिमत्त्वमनित्यत्वं वा पर्यायेण हेतुर्न युगपत्। तच्च द्वयमपि साङ्ख्यस्य वादिनो न सिद्धम्। परार्थो हि हेतूपन्यासः। तेन यः परस्य सिद्धः स हेतुर्वक्तव्यः। परस्य चासत उत्पाद उत्पत्तिमत्त्वं, सतश्च निरन्वयो विनाशोऽनित्यत्वं सिद्धम्। तादृशं च द्वयमपि साङ्ख्यस्यासिद्धम्। इहाप्यनित्यत्वोत्पत्तिमत्त्वसाधनाज्ञानात् वादिनोऽसिद्धम्। [ ६४ ] यदि त्वनित्यत्वोत्पत्तिमत्त्वयोः प्रमाणं वादिनो ज्ञातं स्यात्, वादिनोऽपि सिद्धं स्यात्। ततः प्रमाणापरिज्ञानादिदं वादिनोऽसिद्धम्।

संदिग्धासिद्धं दर्शयितुमाह—

**तथा स्वयं तदाश्रयणस्य वा संदेहेऽसिद्धः ॥ ६३ ॥**

स्वयमिति हेतोरात्मनः संदेहेऽसिद्धः। तदाश्रयणस्य वेति। तस्य हेतोराश्रयणं आश्रीयतेऽस्मिन्हेतुरिति 'आश्रयणं' हेतोर्व्यतिरिक्त आश्रयभूतः साध्यधर्मी कथ्यते। तत्र हि हेतुर्वर्तमानो गमकत्वेनाश्रीयते। तस्याश्रयणस्य संदेहे सांदिग्धः।

स्वात्मना संदिह्यमानमुदाहर्तुमाह—

**यथा बाष्पादिभावेन संदिह्यमानो भूतसंघातो अग्निसिद्धावुपदिश्यमानः संदिग्धासिद्धः ॥ ६४ ॥**

यथेति। बाष्प आदिर्यस्य स बाष्पादिः तद्भावेन बाष्पादित्वेन संदिह्यमानः। भूतसंघात इति। 'भूतानां' पृथिव्यादीनां 'संघातः' समूहः। 'अग्निसिद्धौ' अग्निसिद्ध्यर्थमुपादीयमानोऽसिद्धः। एतदुक्तं भवति। यदा धूमोऽपि बाष्पादित्वेन संदिग्धो भवति तदा असिद्धः, गमकरूपानिश्चयात्। धूमतया निश्चितो वह्निजन्यत्वाद्गमकः। यदा तु संदिग्धस्तदा न गमक इति असिद्धताख्यो दोषः।

आश्रयणासिद्धमुदाहरति—

**यथेह निकुञ्जे मयूरः केकायितादिति ॥ ६५ ॥**

यथेति । इह निकुञ्जे इति धर्मी । पर्वतोपरिभागेन तिर्यङ्-निर्गतेन प्रच्छादितो भूभागो 'निकुञ्जः' । मयूर इति साध्यम् । केकायितादिति हेतुः । केकायितं मयूरध्वनिः ।

कथमाश्रयणासिद्ध इत्याह—

[६५] तदापातदेशविभ्रमे ॥ ६६ ॥

तदापात इति । तस्य केकायितस्य 'आपातः' आगमनं तस्य देशः स उच्यते यस्माद्देशादागच्छति केकायितम् । तस्य 'विभ्रमे' व्यामोहे सति अयमाश्रयणासिद्धः । निरन्तरेषु बहुषु निकुञ्जेषु सत्सु यदा केकायितापातनिकुञ्जे विभ्रमः 'किमस्मान्निकुञ्जात्केकायितमागतमाहोस्विदस्मात्' इति, तदा आश्रयणासिद्ध इति ।

धर्मिणोऽसिद्धावप्यसिद्धत्वमुदाहरति—

**धर्म्यसिद्धावप्यसिद्धो यथा सर्वगत आत्मेति साध्ये सर्वत्रोपलभ्यमानगुणत्वम् ॥ ६७ ॥**

यथेति । सर्वस्मिन् 'गतः' स्थितः सर्वगतः; व्यापीति यावत् । व्यापित्वे आत्मनः साध्ये सर्वत्रोपलभ्यमानगुणत्वं लिङ्गम् । सर्वत्र देशे उपलभ्यमानाः सुखदुःखेच्छाद्वेषादयो गुणा यस्यात्मनस्तस्य भावस्तत्त्वम् । न गुणा गुणिनमन्तरेण वर्तन्ते । गुणानां गुणिनि समवायात् । निष्क्रियश्चात्मा । ततश्च यदि व्यापी न भवेत्, कथं दक्षिणापथे उपलब्धाः सुखादयो मध्यदेशे उपलभ्येरन् । तस्मात् सर्वगत आत्मा । तदिह बौद्धस्यात्मैव न सिद्धः, किमुत सर्वत्रोपलभ्यमानगुणत्वं सिध्येत् तस्य; इत्यसिद्धो हेत्वाभासः । पूर्वमाश्रयणसंदेहेन धर्मिणि संदेह उक्तः; संप्रति त्वसिद्धो धर्म्युक्त इत्यनयोर्विशेषः । तदेवमेकस्य रूपस्य धर्मि[सं]बद्धस्यासिद्धावसिद्धो हेत्वाभासः ।

**तथैकस्य रूपस्यासपक्षेऽसत्त्वस्यासिद्धावनैकान्तिको हेत्वाभासः ॥ ६८ ॥**

तथा अपरस्यैकस्य रूपस्य असपक्षेऽसत्त्वाख्यस्य असिद्धावनैकान्तिको हेत्वाभासः । एकोऽन्त 'एकान्तः' निश्चयः । स प्रयोजन-

मस्येत्यैकान्तिकः, नैकान्तिकः 'अनैकान्तिकः'। यस्मान्न साध्यस्य न विपर्ययस्य निश्चयः अपि तु तद्विपरीतः संशयः।

साध्येतरयोः संशयहेतुरनैकान्तिक उक्तः। तमुदाहरति—

**[ ६६ ] यथा शब्दस्य नित्यत्वादिके धर्मे साध्ये प्रमेयत्वादिको धर्मः सपक्षविपक्षयोः सर्वत्रैकदेशे वा वर्तमानः ॥ ६९ ॥**

यथेत्यादिना। नित्यत्वमादिर्यस्य स नित्यत्वादिको धर्मः। आदिशब्दादप्रयत्नानन्तरीयकत्वं प्रयत्नानन्तरीयकत्वं नित्यत्वं च परिगृह्यते। प्रमेयत्वमादिर्यस्य स प्रमेयत्वादिकः। आदिशब्दादनित्यत्वं पुनरनित्यत्वममूर्तत्वं च गृह्यते। शब्दस्य धर्मिणो नित्यत्वादिके धर्मे साध्ये प्रमेयत्वादिको धर्मोऽनैकान्तिकः। चतुर्णामपि विपक्षेऽसत्त्वमसिद्धम्। तथाहि। नित्यः शब्दः प्रमेयत्वादाकाशवद्घटवदिति प्रमेयत्वं सपक्षविपक्षव्यापि। अप्रयत्नानन्तरीयकः शब्दोऽनित्यत्वाद्विद्युदाकाशवद्घटवच्चेत्यनित्यत्वं सपक्षैकदेशवृत्ति, विद्युदादावस्ति नाकाशादौ; विपक्षव्यापि, प्रयत्नानन्तरीयके सर्वत्र भावात्। अनित्यत्वात्प्रयत्नानन्तरीयकः शब्दो घटवद्विद्युदाकाशवच्चेत्यनित्यत्वं विपक्षैकदेशवृत्ति, विद्युदादावस्ति नाकाशादौ; सपक्षव्यापि, सर्वत्र प्रयत्नानन्तरीयके भावात्। नित्यः शब्दोऽमूर्तत्वादाकाशपरमाणुवत्कर्मघटवच्चेत्यमूर्तत्वमुभयैकदेशवृत्ति। उभयोरेकदेशः आकाशे कर्मणि च वर्तते; परमाणौ तु सपक्षैकदेशे, घटादौ च विपक्षैकदेशे, न वर्तते; मूर्तत्वाद्घटपरमाणुप्रभृतिनाम्। नित्यास्तु परमाणवो वैशेषिकैरभ्युपगम्यन्ते। ततः सपक्षान्तर्गताः। अस्य चतुर्विधस्य पक्षधर्मस्यासत्त्वमसिद्धं विपक्षे। ततोऽनैकान्तिकता।

**तथाऽस्यैव रूपस्य संदेहेऽप्यनैकान्तिक एव ॥७०॥**

यथा चास्य रूपस्यासिद्धावनैकान्तिकः तथाऽस्यैव विपक्षे असत्त्वाख्यस्य रूपस्य संदेहेऽनैकान्तिकः।

तमुदाहरति—

**यथा ऽसर्वज्ञः कश्चिद्विवक्षितः पुरुषो रागादिमान्वेति साध्ये वक्तृत्वादिको धर्मः संदिग्धविपक्षव्यावृत्तिकः ॥ ७१ ॥**

यथेति । असर्वज्ञ इति असर्वज्ञत्वं साध्यम् । कश्चित् 'विवक्षितः' इति वक्तुरभिप्रेतः पुरुषो धर्मी । राग आदिर्यस्य द्वेषादेः स रागादिः, स यस्यास्ति स रागादिमानिति द्वितीयं साध्यम् ।
[६७] वाग्रहणं रागादिमत्त्वस्य पृथक्साध्यत्वख्यापनार्थम् । ततोऽसर्वज्ञत्वे रागादिमत्त्वे वा साध्ये प्रकृते 'वक्तृत्वं' वचनशक्तिः तदादिर्यस्योन्मेषनिमेषादेः स वक्तृत्वादिको धर्मोऽनैकान्तिकः । संदिग्धा विपक्षाद्व्यावृत्तिर्यस्य स तथोक्तः । असर्वज्ञत्वे साध्ये सर्वज्ञत्वं विपक्षः । तत्र वचनादेः सत्त्वमसत्त्वं वा संदिग्धम् । अतो न ज्ञायते वक्ता सर्वज्ञ उतासर्वज्ञ इत्यनैकान्तिकं वकृत्वम् ।

ननु च सर्वज्ञो वक्ता नोपलभ्यते, तत्कथं वचनं सर्वज्ञे संदिग्धम् ? अत एव --

**सर्वज्ञो वक्ता नोपलभ्यते इत्येवंप्रकारस्यानुपलम्भस्यादृश्यात्मविषयत्वेन संदेहहेतुत्वात् । ततोऽसर्वज्ञविपर्ययाद्वक्तृत्वादेर्व्यावृत्तिः संदिग्धा ॥ ७२ ॥**

सर्वज्ञो वक्ता नोपलभ्यते इति 'एवंप्रकारस्य' एवंजातीयकस्यानुपलम्भ[वाक्य]स्य संदेहहेतुत्वात् । कुत इत्याह । अदृश्यात्मा विषयो यस्य तस्य भावोऽदृश्यात्मविषयत्वं तेन संदेहहेतुत्वम् । अतो ऽदृश्यविषयो ऽनुपलम्भः संशयहेतुर्न निश्चयहेतुः, 'ततः' असर्वज्ञविपक्षात्सर्वज्ञात् वक्तृत्वादेर्व्यावृत्तिः संदिग्धा ।

नानुपलम्भात् सर्वज्ञे वक्तृत्वमसद्भूमोऽपि तु सर्वज्ञत्वेन सह वक्तृत्वस्य विरोधात् । एतन्न ;

**वक्तृत्वसर्वज्ञत्वयोर्विरोधाभावाच्च । यः सर्वज्ञः स वक्ता न भवतीत्यदर्शनेऽपि व्यतिरेको न सिध्यति । संदेहात् ॥ ७३ ॥**

सर्वज्ञत्ववक्तृत्वयोर्विरोधो नास्ति । विरोधाभावाच्च कारणात् व्यतिरेको न सिध्यतीति संबन्धः । व्याप्तिमन्तं व्यतिरेकं दर्शयति । यः सर्वज्ञ इति साध्याभावरूपं सर्वज्ञत्वमनूद्य न स वक्ता भवतीति साधनस्य वक्तृत्वस्याभावो विधीयते । तेन साध्याभावः साधनाभावे नियतत्वात् साधनाभावेन व्याप्त उक्त इति व्याप्तिमानीदृशो व्यतिरेकः विरोधे सति वक्तृत्वसर्वज्ञत्वयोः सिध्येत् । न चास्ति विरोधः । तस्मान्न सिध्यति । कुत इत्याह । संदेहात् । यतो विरोधाभावः तस्मात् संदेहः । संदेहाद्व्यतिरेकासिद्धिः ।

कथं विरोधाभावः ?

**द्विविधो हि पदार्थानां विरोधः ॥ ७४ ॥**

हीति यस्माद्द्विविध एव विरोधो नान्यः ; तस्मान्न वक्तृत्वसर्वज्ञत्वयोर्विरोधः ।

कः पुनरसौ द्विविधो विरोध इत्याह—

**अविकलकारणस्य भवतो ऽन्यभावे अभावाद्विरोधगतिः ॥ ७५ ॥**

अविकलकारणस्येति । 'अविकलानि' समग्राणि कारणानि यस्य स तथोक्तः । यस्य कारणवैकल्यादभावो न तस्य केनचिदपि विरोधगतिः । तदर्थमविकलकारणग्रहणम् । ननु च यस्यापि कारणसाकल्यं तस्यापि निवृत्तिरशक्या केनचिदपि कर्तुम् ; तत्कुतो विरोधगतिः ? एवं तर्हि - ['अभावात्'] अविकलकारणस्यापि यत्कृतात् कारणवैकल्यादभावः तेन विरोधगतिः । तथा च सति यो यस्य विरुद्धः स तस्य किंचित्कर एव । तथा हि । शीतस्पर्शस्य जनको भूत्वा शीतस्पर्शान्तरजननशक्तिं प्रतिबध्नन् शीतस्पर्शस्य निवर्तको विरुद्धः । तस्माद्धेतुवैकल्यकारी विरुद्धो जनक एव । निवर्त्यस्य सहानवस्थानविरोधश्चायम् । ततो विरुद्धयोरेकस्मिन्नपि क्षणे सहावस्थानं परिहर्तव्यम् । दूरस्थयोर्विरोधाभावाच्च निकटस्थयोरेव निवर्त्यनिवर्तकभावः । तस्माद्यो यस्य निवर्तकः स तं, यदि परं, तृतीये क्षणे निवर्तयति । प्रथमे

क्षणे सन्निपतन्नसमर्थावस्थाधानयोग्यो भवति । द्वितीये विरुद्धमसमर्थं करोति । तृतीये त्वसमर्थे निवृत्ते तद्देशमाक्रामति । तत्रालोको गतिधर्मा क्रमेण जलतरङ्गन्यायेन देशमाक्रामयन् यदाऽन्धकारे निरन्तरमालोकक्षणं जनयति, तदा आलोकसमीपवर्तिनमन्धकारमसमर्थं जनयति । ततोऽसामर्थ्यं तस्य, यस्य समीपवर्त्यालोकः । असामर्थ्ये निवृत्ते तादृशो जायत आलोकः इत्येवं क्रमेणालोकेनान्धकारोऽपनेयः ; तथोष्णस्पर्शेन शीतस्पर्शो निवर्तनीयः । यदा त्वालोकः तत्रैवान्धकारे देशे जन्यते तदा यतः क्षणादन्धकारदेशस्यालोकस्य जनकक्षण उत्पद्यते तत एवान्धकारोऽन्धकारान्तरजननासमर्थ उत्पन्नः । ततोऽसमर्थावस्थाजनकत्वमेव निवर्तकत्वम् । अतश्च यस्मिन् क्षणे जनकः ततः तृतीये क्षणे निवृत्तो विरुद्धः, यदि शीघ्रं [ ६९ ] निवर्तते । जन्यजनकभावाच्च **संतानयोर्विरोधो** न क्षणयोः । यद्यपि च न संतानो नाम वस्तु तथापि संतानिनो वस्तुभूताः । ततोऽयं परमार्थः । न क्षणयोर्विरोधः अपि तु बहूनां क्षणानाम् । यतः सत्सु दहनक्षणेषु प्रवृत्ता अपि शीतक्षणा निवृत्तिधर्माणो भवन्तीति । संतानयोर्निवर्त्यनिवर्तकत्वनिमित्ते च विरोधे स्थिते, सर्वेषां परमाणूनां सत्यप्येकदेशावस्थानाभावे न विरोध इतरेतरसंतानानिवर्तनात्तेषाम् । गतिधर्मा चालोको यां दिशमाक्रामति तद्दिग्वर्तिनो विरोधिसंतानान्निवर्तयति । ततोऽपवरकैकदेशस्था प्रदीपप्रभा अन्धकारनिकटवर्तिन्यपि नान्धकारं निवर्तयति । अन्धकाराक्रान्तायां दिशि आलोकक्षणान्तरजननासामर्थ्यात् । कारणासामर्थ्यहेतुकृतं संतानननिष्ठमेव विरोधं दर्शयता 'भवतः' इति कृतम् । 'भवतः' प्रबन्धेन वर्तमानस्य शीतस्पर्शसंतानस्याभावोऽन्यस्योष्णस्पर्शसंतानस्य भावे सतीति ।

ये त्वाहुः – न विरोधो वास्तवः इति, ते इदं वक्तव्याः । यथा न निष्पन्ने कार्ये कश्चिज्जन्यजनकभावो नाम दृष्टोऽस्ति – कारणपूर्विका तु कार्यप्रवृत्तिः, अतो वास्तवः एव [सः], तद्वन्न निवृत्ते वस्तुनि कश्चिदिष्टो नाम विरोधोऽस्ति । दहननिमित्तं तु शीतस्पर्शस्य क्षणान्तरासामर्थ्यं अतो विरोधोऽपि वास्तवः एव ।

उदाहरणमाह —

**शीतोष्णस्पर्शवत् ॥ ७६ ॥**

शीतश्चोष्णश्च तावेव स्पर्शौ, तयोरिव । शीतोष्णस्पर्शयोर्हि पूर्ववद्विरोधो योजनीयः ।

द्वितीयमपि विरोधं दर्शयितुमाह—

**परस्परपरिहारस्थितलक्षणतया वा भावाभाववत् ॥ ७७ ॥**

परस्परं 'परिहारः' परित्यागः तेन स्थितं 'लक्षणं' रूपं ययोः तद्भावः परस्परपरिहारस्थितलक्षणता तया । इह यस्मिन् परिच्छिद्यमाने यत् व्यवच्छिद्यते तत् परिच्छिद्यमा[ ७० ]नमवच्छिद्यमानपरिहारेण स्थितरूपं द्रष्टव्यम् । नीले च परिच्छिद्यमाने तादूप्यप्रच्युतिरवच्छिद्यते, तदव्यवच्छेदे नीलपरिच्छेदप्रसङ्गात् । तस्मात् वस्तुनो भावाभावौ परस्परपरिहारेण स्थितरूपौ । नीलात्तु यदन्यद्रूपं तन्नीलाभावाव्यभिचारि; नीलस्य दृश्यस्य पीतादावुपलभ्यमाने अनुपलम्भादभावनिश्चयात् । यथा च नीलं स्वाभावं परिहरति तद्वदभावाव्यभिचारि पीतादिकमपि । तथा च भावाभावयोः साक्षाद्विरोधः, वस्तुनोस्तु अन्योन्याभावाव्यभिचारित्वाद्विरोधः । कस्य चान्यत्राभावावसायः? यो नियताकारोऽर्थः तस्य । न त्वनियताकारोऽर्थः । क्षणिकत्वादिवत् । क्षणिकत्वं हि सर्वेषां नीलादीनां स्वरूपात्मकम् । अतो न नियताकारम्; यतः क्षणिकत्वपरिहारेण न किंचिद्दृश्यते । यद्येवं, अभावोऽपि न नियताकारः? कथं न नियताकारो नाम; यावता वस्तुरूपविविक्ताकारः कल्पितोऽभावः । ततो दृष्टं कल्पितं वा नियतं रूपमन्यत्र असदवसीयते नानियतम् । एवं च नित्यत्वपिशाचादिरपि नियताकारः कल्पितो द्रष्टव्यः । एकात्मकत्वविरोधश्चायम् । ययोर्हि परस्परपरिहारेणावस्थानं तयोरेकत्वाभावः । अत एव लाक्षणिकोऽयं विरोध उच्यते । 'लक्षणं' रूपं वस्तूनां प्रयोजनमस्येति कृत्वा । विरोधेन ह्यनेन वस्तुतत्त्वं विभक्तं व्यवस्था-

ध्यते। अतएव दृश्यमाने रूपे यन्निषिध्यते तत् दृश्यमेवाभ्युपगम्य निषिध्यते। तथा हि। अभावोऽपि पिशाचोऽपि यदा पीते निषेद्धुमिष्यते तदा दृश्यात्मतया निषेध्य इति दृश्यत्वमभ्युपगम्य दृश्यानुपलब्धेरेव निषेधः। तथा च सति रूपे परिच्छिद्यमाने एकस्मिन् तदभावो दृश्यो व्यवच्छिद्यते। ततः स्वप्रच्युतिवत् प्रच्युतिमन्तोऽपि व्यवच्छिन्ना इति। ये परस्परपरिहारस्थितरूपाः सर्वे तेऽनेन निषिद्धीकृत्वा इति। सत्यपि चास्मिन्विरोधे सहावस्थानं स्यादपि। ततो भिन्नव्यापारौ विरोधौ — एकेन विरोधेन शीतोष्णस्पर्शयोरेकत्वं वार्यते, अन्येन सहावस्थानम्; भिन्नप्रवृत्तिविषयौ च। सकले वस्तुन्यवस्तुनि च परस्परपरिहाराविरोधः। वस्तुन्येव कतिपये सहानवस्थानाविरोधः। तस्माद्भिन्नव्यापारौ भिन्नविषयौ च। ततो नानयोरन्योन्यान्तर्भाव इति।

**स च द्विविधोऽपि विरोधो वक्तृत्वसर्वज्ञत्वयोर्न संभवति ॥ ७८ ॥**

[ ७१ ] स चायं द्विविधोऽपि विरोधो वक्तृत्वं च सर्वज्ञत्वं च तयोः न संभवति। न ह्यविकलकारणस्य सर्वज्ञत्वस्य वक्तृत्वभावादभावगतिः। सर्वज्ञत्वं ह्यदृश्यम्। अदृष्ट(श्य)स्य चाभावो न.वसीयते। ततो नानेन विरोधगतिर्भवति। न च वक्तृत्वपरिहारेण सर्वज्ञत्वमवस्थितम्, काष्ठादयोऽपि [यं] वक्तृत्वपरिहृताः तेषामपि सर्वज्ञत्वप्रसङ्गात्। नापि सर्वज्ञत्वपरिहारेण वक्तृत्वम्। काष्ठादीनामपि वक्तृत्वप्रसङ्गात्। तत एवाविरोधाद्वक्तृत्वाविधानेन सर्वज्ञत्वनिषेधः।

स्यादेतत्। यदि नास्त्येव विरोधो घटपटयोरिव, स्यादपि तयोः सहावस्थितिदर्शनम्। अदर्शनात्तु विरोधगतिः। विरोधाच्चाभावगतिरित्याशङ्क्याह —

**न चाविरुद्धविधेरनुपलब्धावप्यभावगतिः ॥ ७९ ॥**

न चाविरुद्धविधेरिति। अनुपलब्धावपि नायं विरुद्धविधिः। यद्यपि च सहावस्थानानुपलम्भः तथापि न तयोर्विरोधः; यस्मान्न सहानुपलम्भमात्राद्विरोधः, अपि तु द्वयोरुपलभ्यमानयोर्निवर्त्यनिवर्तकभावावसायात्। तस्मादनुपलब्धावपि न वक्तृत्वविरोधिविरुद्धविधिः।

अतो ऽस्मान्नान्यस्याभावगतिः ।

तथा न वक्तृत्वाद्रागादिमत्त्वगतिः ; यतो यदि वचनादि रागादीनां कार्यं स्यात् वचनादे रागादिगतिः स्यात्, रागादिनिवृत्तौ [च] वचनादिनिवृत्तिः स्यात् । न च कार्यम् । कुतः ?

**रागादीनां वचनादेश्च कार्यकारणभावासिद्धेः ॥८०॥**

रागादीनां वचनादेश्च कार्यकारणभावस्यासिद्धेः कारणात् न कार्यं, अतो ऽस्मान्न गतिः ।

माभूद्रागादिकार्यं वचनम्, सहचारि तु भवति ; ततो रागादौ सहचारिणि निवृत्ते निवर्तते वचनमित्याशङ्क्याह—

[७२] **अर्थान्तरस्य वाऽकारणस्य निवृत्तौ न वचनादेर्निवृत्तिः ॥ ८१ ॥**

**इति संदिग्धव्यतिरेकोऽनैकान्तिको वचनादिः ॥८२॥**

अर्थान्तरस्य वा ऽकारणस्य निवृत्तौ सहचारित्वदर्शनमात्रेण नान्यस्य वचनादेर्निवृत्तिः । अतो वक्तृत्वं भवेद्रागादिविरहश्चेति । इतिशब्दः तस्मादर्थे । तस्मादसर्वज्ञत्वविपर्ययाद्विपक्षात् सर्वज्ञत्वाद्रागादिमत्त्वविपर्ययादरागादिमत्त्वात् संदिग्धो व्यतिरेको वचनादेः । अतो ऽनैकान्तिको वचनादिः ।

एवमेकैकरूपासिद्धिसंदेहे हेतुदोषानाख्याय द्वयोर्द्वयो रूपयोरसिद्धिसंदेहे हेतुदोषान्वक्तुकाम आह—

**द्वयो रूपयोर्विपर्ययसिद्धौ विरुद्धः ॥ ८३ ॥**

द्वयो रूपयोर्विपर्ययसिद्धौ सत्यां विरुद्धः ।

त्रीणि च रूपाणि सन्ति । ततो विशेषज्ञापनार्थमाह—

**कयोर्द्वयोः ॥ ८४ ॥**

कयोर्द्वयोरिति ।

विशिष्टे रूपे दर्शयति—

**सपक्षे सत्त्वस्यासपक्षे चासत्त्वस्य ॥ ८५ ॥**

**यथा कृतकत्वं प्रयत्नानन्तरीयकत्वं च नित्यत्वे साध्ये विरुद्धौ हेत्वाभासः ॥ ८६ ॥**

सपक्षे सत्त्वस्यासपक्षे चासत्त्वस्य विपर्ययसिद्धाविति संबन्धः। कृतकत्वमिति स्वभावहेतुः। प्रयत्नानन्तरीयकत्वमिति कार्यहेतुः। प्रयत्नानन्तरीयकशब्देन हि प्रयत्नानन्तरं जन्म ज्ञानं च प्रयत्नानन्तरीयकमुच्यते। 'जन्म' जायमानस्य स्वभावः। 'ज्ञानं' ज्ञेयस्य कार्यम्। तदिह प्रयत्नानन्तरं ज्ञानं गृह्यते। तेन कार्यहेतुः। एतौ हेतू नित्यत्वे साध्ये विरुद्धौ हेत्वाभासौ।

कस्मात्पुनरेतौ विरुद्धावित्याह —

[७३] **अनयोः सपक्षेऽसत्त्वमसपक्षे च सत्त्वमिति विपर्ययासिद्धिः ॥ ८७ ॥**

अनयोरिति। सपक्षे नित्ये कृतकत्वप्रयत्नानन्तरीयकत्वयोरसत्त्वमेव निश्चितम्। अनित्ये विपक्षे एव सत्त्वं निश्चितमिति विपर्ययसिद्धिः।

कस्मात्पुनर्विपर्ययसिद्धावप्येतौ विरुद्धावित्याह —

**एतौ च साध्यविपर्ययसाधनाद्विरुद्धौ ॥ ८८ ॥**

एतौ च साध्यस्य नित्यत्वस्य विपर्ययं अनित्यत्वं साधयतः। साध्यविपर्ययसाधनात् विरुद्धौ।

यदि साध्यविपर्ययसाधनाद्विरुद्धावेतौ, उक्तं च परार्थानुमाने साध्यं न त्वनुक्तं, इष्टं चानुक्तं; अतोऽन्य इष्टविघातकृदाभ्यामिति दर्शयन्नाह —

**ननु च तृतीयोऽपीष्टविघातकृद्विरुद्धः ॥ ८९ ॥**

ननु च तृतीयोऽपि विरुद्ध उक्तः। उक्तविपर्ययसाधनौ द्वौ। तृतीयोऽयं इष्टस्य शब्देनानुपात्तस्य विघातं करोति विपर्ययसाधनादिति 'इष्टविघातकृत्'।

तमुदाहरति —

**यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनाद्यङ्गवदिति ॥ ९० ॥**

यथेति । चक्षुरादय इति धर्मी । परः 'अर्थः' प्रयोजनं संस्कार्य उपकर्तव्यो येषां ते 'परार्थाः' इति साध्यम् । 'संघातत्वात्' संचितरूपत्वादिति हेतुः । चक्षुरादयो हि परमाणुसंचितिरूपाः । ततः संघातरूपा उच्यन्ते । शयनमासनं चादिर्यस्य तत् शयनासनादि । तदेवाङ्गं पुरुषोपभोगाङ्गत्वात् । अयं व्याप्तिप्रदर्शनविषयो दृष्टान्तः । अत्र हि पारार्थ्येन संहतत्वं व्याप्तम् । यतः शयनासनादयः संघातरूपाः पुरुषस्य भोगिनो भवन्त्युपकारका इति परार्था उच्यन्ते ।

कथमयमिष्टविघातकृदित्याह —

**[७४] तदिष्टासंहतपारार्थ्यविपर्ययसाधनाद्विरुद्धः ॥ ९१ ॥**

तदिष्टासंहतपारार्थ्यविपर्ययसाधनादिति । असंहते विषये पारार्थ्यं 'असंहतपारार्थ्यम्', तस्य सांख्यस्य वादिन इष्टमसंहतपारार्थ्यं 'तदिष्टासंहतपारार्थ्यं' तस्य विपर्ययः संहतपारार्थ्यं नाम तस्य साधनात् विरुद्धः । आत्माऽस्तीति ब्रुवाणः सांख्यः, कुत एतदिति पर्यनुयुक्तो बौद्धेन, इदमात्मनः सिद्धये प्रमाणमाह । तस्मादसंहतस्यात्मन उपकारकत्वं साध्यं चक्षुरादीनाम् । अयं तु हेतुर्विपर्ययव्याप्तः । यस्मात् यो यस्योपकारकः स तस्य जनकः, जन्यमानश्च युगपत् क्रमेण वा भवति संहतः; तस्मात् परार्थाश्चक्षुरादय इति संहतपरार्था इति सिद्धम् ।

**स इह कस्मान्नोक्तः ? अनयोरेवान्तर्भावात् ॥ ९२ ॥**

अयं च विरुद्ध आचार्यदिग्नागेनोक्तः । स कस्माद्वार्तिककारेण सता त्वया नोक्त इत्यत आह- अनयोरेव साध्यविपर्ययसाधनयोः अन्तर्भावात् ।

ननु चोक्तविपर्ययं न साधयति तत्कथं उक्तविपर्ययसाधनयोरेव अन्तर्भाव इत्याह—

**न ह्ययमाभ्यां साध्यविपर्ययसाधनत्वेन भिद्यते ॥ ९३ ॥**

नह्ययमिति । हीति यस्मादर्थे । यस्मादयमिष्टविघातकृत् आभ्यां हेतुभ्यां साध्यविपर्ययसाधनत्वेन न भिद्यते - यथा तौ साध्यविपर्ययसाधनौ तथा अयमपि - उक्तविपर्ययं तु साधयतु वा मा वा, किमुक्तविपर्ययसाधनेन ; तस्मादनयोरेवान्तर्भावः ।

ननु चोक्तमेव साध्ये, तत्कथं साध्यविपर्ययसाधनत्वेनाभेद इत्याह--

**न हीष्टोक्तयोः साध्यत्वेन कश्चिद्विशेष इति ॥ ९४ ॥**

नहीति । [हि] यस्मात् इष्टोक्तयोः परपरस्य साध्यत्वेन न कश्चित् 'विशेषः' भेदः 'इति' तस्मात् ; अनयोरेवान्तर्भावः इत्युपसंहारः । प्रतिवादिनो हि यत् जिज्ञासितं तत् प्रकरणापन्नम् । [ ७५ ] यच्च प्रकरणापन्नं तत् साधनेच्छया विषयीकृतम् । साध्यमिष्टं उक्तमनुक्तं वा । नतूक्तमात्रमेव साध्यम् । तेनाविशेष इति ।

[ एकस्यासिद्धावपरस्य च संदेहे कीदृशो हेत्वाभासः ? ]

**द्वयो रूपयोरेकस्यासिद्धावपरस्य च संदेहेऽनैकान्तिकः ॥ ९५ ॥**

द्वयो रूपयोरासिद्धौ विरुद्ध उक्तः । अनयोर्द्वयोर्मध्ये एकस्यासिद्धावपरस्य च संदेहेऽनैकान्तिकः ।

कीदृशोऽसावित्याह--

**यथा वीतरागः कश्चित्सर्वज्ञो वा वक्तृत्वादिति । व्यतिरेकोऽत्रासिद्धः । संदिग्धोऽन्वयः ॥ ९६ ॥**

यथेति । विगतो रागो यस्य स 'वीतरागः' इत्येकं साध्यम् । सर्वज्ञो वेति द्वितीयम् । वक्तृत्वादिति हेतुः । व्यतिरेकोऽत्रासिद्धः इति स्वात्मन्येव सरागे चासर्वज्ञे च विपक्षे वक्तृत्वं दृष्टम् । अतोऽसिद्धो व्यतिरेकः ; संदिग्धोऽन्वयः ।

कुत इत्याह —

**सर्वज्ञवीतरागयोर्विप्रकर्षाद्वचनादेस्तत्र सत्त्वमसत्त्वं वा संदिग्धम् ॥ ९७ ॥**

सपक्षभूतयोः सर्वज्ञवीतरागयोः 'विप्रकर्षात्' इति अतीन्द्रियत्वात् वचनादेः इन्द्रियगम्यस्यापि 'तत्र' अतीन्द्रिययोः सर्वज्ञत्ववीतरागत्वयोः सत्त्वमसत्त्वं वा संदिग्धम् । ततश्च न ज्ञायते किं वक्तृत्वं सर्वज्ञे उत न इत्यनैकान्तिक इति ।

संप्रति द्वयोरेव संदेहेऽनैकान्तिकं वक्तुमाह —

**अनयोरेव द्वयो रूपयोः संदेहेऽनैकान्तिकः ॥ ९८ ॥**

अनयोरेव अन्वयव्यतिरेकरूपयोः संदेहात् संशयहेतुः ।

उदाहरणम् —

[ ७६ ] **यथा सात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति ॥ ९९ ॥**

सहात्मना वर्तते 'सात्मकम्' इति साध्यम् । शरीरमिति धर्मी । जीवद्ग्रहणं धर्मिविशेषणम् । मृते ह्यात्मानं नेच्छति । 'प्राणाः' आश्वासादय आदिर्यस्य उन्मेषनिमेषादेः प्राणिधर्मस्य स प्राणादिः, स यस्यास्ति तत् प्राणादिमत् जीवच्छरीरम्, तस्य भावस्तत्त्वं तस्मादित्येष हेतुः । अयमसाधारणः संशयहेतुरुपपादयितव्यः । पक्षधर्मस्य च द्वाभ्यां कारणाभ्यां संशयहेतुत्वम्— संशयविषयौ यावाकारौ ताभ्यां सर्वस्य वस्तुनः संग्रहात्; तयोश्च व्यापकयोः आकारयोः एकत्रापि वृत्त्यनिश्चयात् । यकाभ्यां ह्याकाराभ्यां सर्वं वस्तु न संगृह्यते तयोः आकारयोः न संशयः; प्रकारान्तरसंभवे हि पक्षधर्मो धर्मिणमवियुक्तं द्वयोरेकेन धर्मेण दर्शयितुं न शक्नुयात् अतो न संशयहेतुः स्यात् । द्वयोः धर्मयोरनियतं भावं दर्शयन् संशयहेतुः, द्वयोस्तु अनियतमपि भावं दर्शयितुमशक्तः अप्रतिपत्तिहेतुः, नियतं भावं दर्शयन् हेतुविरुद्धो वा स्यात् । तस्मात् यकाभ्यां सर्वं वस्तु संगृह्यते तयोः

संशयहेतुः, यदि तयोः एकत्रापि सद्भावनिश्चयो न स्यात् । सद्भावनिश्चये तु यद्येकत्र नियतसत्तानिश्चयः, विरुद्धः हेतुर्वा स्यात् । अनियतसत्तानिश्चये तु साधारणानैकान्तिकः संदिग्धविपक्षव्यावृत्तिकः संदिग्धान्वयः असिद्धव्यतिरेको वा स्यात् । एकत्रापि तु वृत्त्यनिश्चयात् असाधारणानैकान्तिको भवति ।

ततोऽसाधारणानैकान्तिकस्य अनैकान्तिकत्वे हेतुद्वयं दर्शयितुमाह—

**न हि सात्मकनिरात्मकाभ्यामन्यो राशिरस्ति यत्र प्राणादिर्वर्तेत ॥ १०० ॥**

न हीति । सहात्मना वर्तते 'सात्मकः' । निष्क्रान्त आत्मा यस्मात्स 'निरात्मकः' । ताभ्यां [ 'हि' ] यस्मात् नान्यो राशिरस्ति, किंभूतः ? यत्रायं वस्तुधर्मः प्राणादिः वर्तेत ; तस्मादयं तयोर्भवति संशयहेतुः ।

कस्मादन्यराश्यभाव इत्याह—

[७७] **आत्मनो वृत्तिव्यवच्छेदाभ्यां सर्वसंग्रहात् ॥ १०१ ॥**

आत्मनो 'वृत्तिः' सद्भावः 'व्यवच्छेदः' अभावः ताभ्यां सर्वस्य वस्तुनः 'संग्रहात्' क्रोडीकरणात् । यत्र ह्यात्मास्ति तत् सात्मकम् । तदन्यन्निरात्मकम् । ततो नान्यो राशिरस्ति संशयहेतुत्वकारणम् ।

प्रकाराभ्यां सर्वसंग्रहं प्रतिपाद्य द्वितीयमाह—

**नाप्यनयोरेकत्र वृत्तिनिश्चयः ॥ १०२ ॥**

नाप्यनयोः सात्मकानात्मकयोर्मध्ये एकत्र सात्मकेऽनात्मके वा 'वृत्तेः' सद्भावस्य निश्चयोऽस्ति । द्वावपि राशी त्यक्त्वा न वर्तते प्राणादिः, वस्तुधर्मत्वात् । ततश्चानयोरेव वर्तते इत्येतावदेव ज्ञातम् । विशेषे तु वृत्तिनिश्चयो नास्तीत्ययमर्थः ।

तदाह—

**सात्मकत्वेन निरात्मकत्वेन वा प्रसिद्धे प्राणादेरसिद्धेः ॥ १०३ ॥**

सात्मकत्वेनानात्मकत्वेन वा विशेषेण युक्ते 'प्रसिद्धे' निश्चिते वस्तुनि प्राणादेर्धर्मस्य असिद्धेः अनैकान्तिकः, अनिश्चितत्वात् । तदेवं असाधारणस्य धर्मस्यानैकन्तिकत्वे कारणद्वयमभिहितम् ।

पक्षधर्मश्च भवन् सर्वः साधारणोऽसाधारणो वा भवत्यनैकान्तिकः । तस्मादुपसंहारव्याजेन पक्षधर्मत्वं दर्शयति––

**तस्माज्जीवच्छरीरसंबन्धी प्राणादिः सात्मकादनात्मकाच्च सर्वस्माद्व्यावृत्तत्वेनासिद्धेः ताभ्यां न व्यतिरिच्यते ॥ १०४ ॥**

तस्मादित्यादिना । जीवच्छरीरस्य संबन्धी, पक्षधर्म इत्यर्थः । यस्मात्तयोरेकत्रापि न निवृत्तिनिश्चयः तस्मात्ताभ्यां न व्यतिरिच्यते । वस्तुधर्मो हि सर्ववस्तुव्यापिनोः [७८] प्रकारयोः एकत्र नियतसद्भावे निश्चितः प्रकारान्तरान्निवर्तेत । तत एवाह । सात्मकादनात्मकाच्च सर्वस्मात् वस्तुनो व्यावृत्तत्वेनासिद्धेरिति । प्राणादिस्तावत् कुतश्चित् घटादेः निवृत्त एव । ततः एतावदवसातुं शक्यम्–सात्मकादनात्मकाद्वा कियतो निवृत्तः, सर्वस्मात्तु निवृत्तो नावसीयते । ततो न कुतश्चिद्व्यतिरेकः ।

यद्येवं अन्वयोऽस्तु तयोर्निश्चित इत्याह––

**न तत्रान्वेति ॥ १०५ ॥**

न 'तत्र' सात्मकेऽनात्मके वाऽर्थे 'अन्वेति' अन्वयन्वान् प्राणादिः ।

कुत इत्याह––

**एकात्मन्यप्यसिद्धेः ॥ १०६ ॥**

'एकात्मनि' सात्मकेऽनात्मके वा असिद्धेः कारणात् । वस्तुधर्मतया तयोर्द्वयोः एकत्र वा वर्तते इत्यवसितः प्राणादिः, न तु सात्मके एव निरात्मके एव वा वर्तते [इत्यवसितः]; इति कुतोऽन्वयनिश्चयः ।

ननु च प्रतिवादिनो न किंचित् सात्मकमस्ति । ततोऽस्य हेतोः न सात्मके अन्वयः न व्यतिरेके इत्यन्वयव्यतिरेकयोः अभावनिश्चयः सात्मके, न तु सद्भावसंशय इत्याह––

**नापि सात्मकान्निरात्मकाच्च तस्यान्वय-व्यतिरेकयोरभावनिश्चयः ॥ १०७ ॥**

नापि सात्मकात् वस्तुनः तस्य प्राणादेः अन्वयव्यतिरेकयोरभावनिश्चयः । नापि च निरात्मकात् । सात्मकादनात्मकादिति च पञ्चमी व्यतिरेकशब्दापेक्षया द्रष्टव्या ।

कथमन्वयव्यतिरेकयोः नाभावनिश्चय इत्याह—

**एकाभावनिश्चयस्यापरभाव[निश्चय]-नान्तरीयकत्वात् ॥ १०८ ॥**

एकस्य अन्वयस्य व्यतिरेकस्य वा योऽभावनिश्चयः स [एव] अपरस्य द्वितीयस्य भाव[७९]निश्चयनान्तरीयकः भावनिश्चयस्य अव्यभिचारी, तस्य भावः तत्त्वं तस्मात् । यत एकाभावनिश्चयोऽपरभावनिश्चयनान्तरीयकः तस्मात् न द्वयोरेकत्राभावनिश्चयः ।

कस्मात्पुनः एकस्याभावनिश्चयः अपरसद्भावनिश्चयाव्यभिचारीत्याह—

**अन्वयव्यतिरेकयोरन्योन्यव्यवच्छेदरूपत्वात् । अत एवान्वयव्यतिरेकयोः संदेहादनैकान्तिकः ।१०९।**

अन्योन्यस्य 'व्यवच्छेदः' अभावः स एव रूपं ययोः तयोर्भावः तत्त्वं तस्मात् कारणात् । अन्वयव्यतिरेकौ भावाभावौ । भावाभावौ च परस्परव्यवच्छेदरूपौ । यस्य व्यवच्छेदेन यत् परिच्छिद्यते तत् तत्परिहारेण व्यवस्थितम् । स्वाभावव्यवच्छेदेन च भावः परिच्छिद्यते । तस्मात् स्वाभावव्यवच्छेदेन भावो व्यवस्थितः । अभावो हि नीरूपः, यादृशो विकल्पेन दर्शितः । नीरूपतां च व्यवच्छिद्य रूप आकारवत् परिच्छिद्यते । तथाच सति अन्वयाभावो व्यतिरेकः, व्यतिरेकाभावश्च अन्वयः । ततोऽन्वयाभावे निश्चिते व्यतिरेको निश्चितो भवति ; व्यतिरेकाभावे च निश्चिते अन्वयो निश्चितो भवति । तस्मात् यदि नाम सात्मकं अवस्तु निरात्मकं च वस्तु, तथापि न तयोः प्राणादेः अन्वयव्यतिरेकयोः अभावनिश्चयः । एकवस्तुनि एकवस्तुनो युगपद्भावाभावविरोधात् तयोरभावनिश्चयायोगात् ।

न च प्रतिवाद्यनुरोधात् सात्मकानात्मके वस्तुनी सदसती किं तु प्रमाणानुरोधात् इत्युभे संदिग्धे। ततः तयो प्राणादिमत्त्वस्य सदसत्त्वसंशयः। यत एव क्वचिदन्वयव्यतिरेकयोः न भावनिश्चयो नाप्यभावनिश्चयः तत एव अन्वयव्यतिरेकयोः संदेहः। यदि तु क्वचिदपि अन्वयव्यतिरेकयोः एकस्यापि अभावनिश्चयः स्यात् स एव द्वितीयस्य भावनिश्चय इत्यन्वयव्यतिरेकसंदेह एव न स्यात्। यतश्च न क्वचिद्भावाभावनिश्चयः तत एव अन्वयव्यतिरेकयोः संदेहः। संदेहाच्चानैकान्तिकः।

कस्मादनैकान्तिकः ?

[८०] **साध्येतरयोरतो निश्चयाभावात् ॥११०॥**

साध्यस्य इतरस्य च विरुद्धस्य अतः संदिग्धान्वयव्यतिरेकात् निश्चयाभावात्। सपक्षविपक्षयोर्हि सदसत्त्वसंदेहे न साध्यस्य न विरुद्धस्य सिद्धिः। न च सात्मकानात्मकाभ्यां (च) परः प्रकारः संभवति। ततः प्राणादिमत्त्वात् धर्मिणि जीवच्छरीरे संशयः आत्मभावाभावयोः इत्यनैकान्तिकः प्राणादिरिति।

त्रयाणां असिद्धौ संदेहे च हेतुदोषानुत्पाद्य उपसंहरन्नाह —

**एवं त्रयाणां रूपाणामेकैकस्य द्वयोर्द्वयोर्वा रूपयोरसिद्धौ संदेहे च यथायोगमसिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ॥१११॥**

एवमित्यनन्तरोक्तेन क्रमेणैषां मध्ये एकैकं रूपं यत् असिद्धं संदिग्धं वा भवति। द्वे द्वे वा असिद्धे संदिग्धे वा भवतः। तदा असिद्धश्च विरुद्धश्च अनैकान्तिकश्च ते हेत्वाभासाः। यथायोगमिति। यस्यासिद्धौ संदेहे वा यो हेत्वाभासो युज्यते स तस्यासिद्धेः संदेहाच्च व्यवस्थाप्यत इति। यस्य यस्य येन येन योगः 'यथायोगं' इति।

ननु च आचार्येण

**विरुद्धाव्यभिचार्यपि संशयहेतुरुक्तः ॥११२॥**

हेत्वन्तरसाधितस्य विरुद्धं यत् तं न व्यभिचरति स 'विरुद्धा-

व्यभिचारी'। यदि वा विरुद्धश्चासौ साधनान्तरसिद्धस्य धर्मस्य, विरुद्धसाधनादव्यभिचारी च, स्वसाध्याव्यभिचारात् 'विरुद्धाव्यभिचारी'।

**स इह नोक्तः।**

सत्यं उक्त आचार्येण। मया त्विह नोक्तः। कस्मादित्याह—

**अनुमानविषयेऽसंभवात्॥ ११३॥**

अनुमानस्य विषयः प्रमाणसिद्धं त्रैरूप्यम्। यतो ह्यनुमानसद्भावः सः अनुमानस्य विषयः। प्रमाणसिद्धाच्च त्रैरूप्यात् अनुमानसद्भावः तस्मात् तदेवानुमानविषयः। तस्मिन् प्रक्रान्ते न [८१] विरुद्धाव्यभिचारिसंभवः। प्रमाणसिद्धे हि त्रैरूप्ये प्रस्तुते स एव हेत्वाभासः संभवति यस्य प्रमाणसिद्धं रूपम्। न च विरुद्धाव्यभिचारिणः प्रमाणसिद्धं अस्ति रूपम्। अतो न संभवः। ततोऽसंभवात् नोक्तः।

कस्मादसंभव इत्याह—

**न हि संभवोऽस्ति कार्यस्वभावयोरुक्तलक्षणयोरनुपलम्भस्य च विरुद्धतायाः॥ ११४॥**

न हीति। यस्मान्न संभवोऽस्ति विरुद्धतायाः। कार्यं च स्वभावश्च तयोः उक्तलक्षणयोरिति। कार्यस्य कारणाज्जन्मलक्षणं तत्त्वम्; स्वभावस्य च साध्यव्याप्तत्वं तत्त्वम्। यत् कार्यं यश्च स्वभावः स कथं आत्म[ीयं] कारणं व्यापकं च स्वभावं परित्यज्य भवेत् येन विरुद्धः स्यात्। 'अनुपलम्भस्य च' उक्तलक्षणस्येति। दृश्यानुपलम्भत्वं अनुपलम्भलक्षणम्।

स्यादेतत्। एतेभ्योऽन्यो भविष्यतीत्याह—

**न चान्योऽव्यभिचारी॥ ११५॥**

न चान्य एतेभ्योऽव्यभिचारी त्रिभ्यः। अत एव तेष्वेव हेतुत्वम्। क तर्ह्याचार्यदिग्नागेनायं हेतुदोष उक्त इत्याह—

**तस्मादवस्तुदर्शनबलप्रवृत्तमागमाश्रयमनुमान-माश्रित्य तदर्थविचारेषु विरुद्धाव्यभिचारी साधनदोष उक्तः ॥ ११६ ॥**

यस्मात् वस्तुबलप्रवृत्तेऽनुमाने न संभवति तस्मात् आगमाश्रयमनुमानं आश्रित्य विरुद्धाव्यभिचारी उक्तः। आगमसिद्धं हि यस्यानुमानस्य लिङ्गत्रैरूप्यं तस्य आगम आश्रयः। ननु चागमासिद्ध-मपि त्रैरूप्यं प्रमाणसिद्धमित्याह—अवस्तुदर्शनबलप्रवृत्तमिति। अव-स्तुनो 'दर्शनं' विकल्पमात्रं तस्य 'बलं' सामर्थ्यं ततः प्रवृत्तम्। अप्रमाणात् विकल्पमात्रात् व्यवस्थितं [८२] त्रैरूप्यं आगमसिद्धं अनुमानस्य; न तु प्रमाणात्। तत् तर्हि अनुमानं आगमसिद्धत्रैरूप्यं क्वाधिकृतमित्याह—तदर्थेति। तस्य आगमस्य यः 'अर्थः' अतीन्द्रियः प्रत्यक्षानुमानाभ्यामविषयीकृतः सामान्यादिः तस्य विचारेषु प्रक्रान्तेषु आगमाश्रयमनुमानं संभवति। तदाश्रयो विरुद्धाव्यभिचार्युक्त आचा-र्येणेति।

कस्मात्पुनरागमाश्रयेऽप्यनुमाने संभव इत्याह—

**शास्त्रकाराणामर्थेषु भ्रान्त्या विपरीतस्य स्वभावस्योपसंहारसंभवात् ॥ ११७ ॥**

शास्त्रकृतां 'विपरीतस्य' वस्तुविरुद्धस्य स्वभावस्य 'उपसंहारः' ढौकनं अर्थेषु। तस्य संभवाद्विरुद्धाव्यभिचारिसंभवः। 'भ्रान्त्या' इति विपर्यासेन। विपर्यस्ता हि शास्त्रकाराः सन्तमसन्तं स्वभावमारोपयन्ति इति।

यदि शास्त्रकृतोऽपि भ्रान्ताः, अन्येष्वपि पुरुषेषु क आश्वास इत्याह—

**न ह्यस्य संभवो यथावस्थितवस्तुस्थि-तिष्वात्मकार्यानुपलम्भेषु ॥ ११८ ॥**

न हीति। न हेतुषु कल्पनया हेतुव्यवस्था अपि तु वस्तु-स्थित्या। ततो यथावस्थितवस्तुस्थितिष्वात्मकार्यानुपलम्भेष्वस्य संभवो

नास्ति। 'अवस्थितं' परमार्थसद्वस्तु, तदनतिक्रान्ता यथावस्थिता 'वस्तुस्थितिः' व्यवस्था येषां ते यथावस्थितवस्तुस्थितयः। ते हि यथा वस्तु स्थितं तथा स्थिताः, न कल्पनया। अतः तेषु न भ्रान्तेरवकाशोऽस्ति येन विरुद्धाव्यभिचारिसंभवः स्यात्।

**तत्रोदाहरणं यत्सर्वदेशावस्थितैः स्वसंबन्धिभिः संबध्यते तत्सर्वगतम्। यथाकाशम्। अभिसंबध्यते च सर्वदेशावस्थितैः स्वसंबन्धिभिर्युगपत्सामान्यमिति ॥ ११९ ॥**

'तत्र' विरुद्धाव्यभिचारिणि उदाहरणम्। यत् सर्वस्मिन्देशेऽवस्थितैः स्वसंबन्धिभिः युगपत् अभिसंबध्यते तत्। सर्वदेशावस्थितैर-[८३] भिसंबध्यमानत्वं सामान्यस्यानूद्य सर्वगतत्वं विधीयते। तेन युगपदभिसंबध्यमानत्वं सर्वगतत्वे 'नियतं' तेन व्याप्तं कथ्यते। इह सामान्यं कणादमहर्षिणा निष्क्रियं दृश्यं एकं चोक्तम्; युगपच्च सर्वैः स्वैः स्वैः संबन्धिभिः समवायेन संबद्धम्। तत्र पैलुकेन कणादशिष्येण व्यक्तिषु व्यक्तिरहितेषु च देशेषु सामान्यं स्थितं साधयितुं प्रमाणमिदमुपन्यस्तम्। यथाकाशमिति व्याप्तिप्रदर्शनविषयो दृष्टान्तः। आकाशमपि हि सर्वदेशावस्थितैर्वृक्षादिभिः स्वसंयोगिभिः युगपदभिसंबध्यमानं सर्वगतं च। अभिसंबध्यते च सर्वदेशावस्थितैः स्वसंबन्धिभिः इति हेतोः पक्षधर्मत्वप्रदर्शनम्।

अस्य स्वभावहेतुत्वं प्रयोजयितुमाह—

**तत्संबन्धिस्वभावमात्रानुबन्धिनी तद्देशसंनिहितस्वभावता। न हि यो यत्र नास्ति स तद्देशमात्मना व्याप्नोतीति स्वभावहेतुप्रयोगः ॥१२०॥**

तत्संबन्धीति। तेषां सर्वदेशावस्थितानां द्रव्याणां संबन्धी सामान्यस्य स्वभावः, स एव तत्संबन्धिस्वभावमात्रम्। तदनुबध्नातीति तदनुबन्धिनी। कासावित्याह- तद्देशसंनिहितस्वभावता। तेषां संब-

न्धिनां देशः तद्देशः तद्देशे संनिहितः स्वभावो यस्य तत् तद्देशसंनि-
हितस्वभावं तस्य भावः तत्ता। यस्य हि येषां संबन्धी स्वभावः तत्
नियमेन तेषां देशे संनिहितं भवति। ततः तत्संबन्धित्वानुबन्धिनी
तद्देशसंनिहितता सामान्यस्य॥ ननु च गवां संबन्धी स्वामी। न च
तद्देशसंनिहितस्वभावः स्वामी। तत्कथं संबन्धित्वात्तद्देशत्वमित्याह—
न हीति। यो यत्र देशे नास्ति [सः], स देशो यस्य स तद्देशः, तं न
व्याप्नोति 'आत्मना' स्वरूपेण। इह सामान्यस्य तद्वतां च समवायलक्षणः
संबन्धः। स चाभिन्नदेशयोरेव। तेन यत्र यत् समवेतं तत् तं आत्मी-
येन रूपेण क्रोडीकुर्वत् समवायिरूपदेशे स्वात्मानं निवेशयति। तद्दे-
शरूपनिवेशनमेव तत्क्रोडीकरणम्। ततः तत्समवायः। तस्मात् यद्यत्
यत्र समवेतं तत्तत् द्रव्यं व्याप्नुवदात्मना तद्देशे संनिहितं भवति।
तदयमर्थः। तद्देशस्थवस्तुव्यापनं तद्देशसत्तया व्याप्तम्। तद्देशस-
त्ताऽभावे तद्व्यापनाभावात् व्यापनलक्षणः [८४] समवायसंबन्धो न
स्यात्। अस्ति च व्यापनम्। अतः तद्देशे संनिहितत्वमिति। तदयं
स्वभावहेतुः।

पैठरप्रयोगं दर्शयन्नाह—

**द्वितीयोऽपि प्रयोगो यदुपलब्धिलक्षणप्राप्तं सन्नोपल-
भ्यते न तत्तत्रास्ति। तद्यथा क्वचिदविद्यमानो घटः।
नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सामान्यं व्यक्त्य-
न्तरालेष्विति। अयमनुपलम्भप्रयोगः स्वभावश्च
परस्परविरुद्धार्थसाधनादेकत्र संशयं जनयतः ॥१२१॥**

द्वितीयोऽपीति। यत् उपलब्धेः 'लक्षणतां' विषयतां प्राप्तं,
दृश्यमित्यर्थः। एतेन दृश्यानुपलब्धिमनूद्य 'न तत्तत्रास्ति' इत्यस-
द्व्यवहार्यत्वं विहितम्। ततो व्याप्यदृश्यानुपलब्धेः व्यापकं असद्व्य-
वहार्यत्वं दर्शितम्। तद्यथेति क्वचिदसन्घटो दृष्टान्तः। पक्षधर्मत्वं दर्श-
यितुमाह-नोपलभ्यते चेति। व्यक्तेः 'अन्तरालं' व्यक्त्यन्तरं च व्यक्ति-
शून्यमाकाशं च। दृश्यमपि कस्यांचिद्व्यक्तौ गोसामान्यं अश्वादिषु
व्यक्त्यन्तरेषु व्यक्तिशून्ये चाकाशे नोपलभ्यते। तस्मान्न तेष्वस्तीति

गम्यते। अयमनुपलम्भः पूर्वोक्तश्च स्वभावः परस्परविरुद्धौ यावर्थौ तयोः साधनात् तावेकस्मिन् धर्मिणि संशयं जनयतः। न ह्येकोऽर्थः परस्परविरुद्धस्वभावो भवितुमर्हति। एकेन चात्र व्यक्त्यन्तरेषु व्यक्तिशून्ये चाकाशे सत्त्वं, अपरेण चानुपलम्भेन असत्त्वं साध्यते। न चैकस्य एकदा एकत्र सत्त्वमसत्त्वं च युक्तं, तयोर्विरोधात्। तस्मादागमसिद्धस्य सामान्यस्य सर्वगतत्वासर्वगतत्वयोः साध्ययोः एतौ विरुद्धाव्यभिचारिणौ जातौ। यतः सामान्यस्यैकस्य युगपत्सर्वदेशावस्थितैः अभिसंबन्धित्वं चाभ्युपगतं दृश्यत्वं च; ततः सर्वसंबन्धित्वात्सर्वगतत्वं दृश्यत्वादन्तरालानुपलम्भात् [च] असर्वगतत्वम्। ततः शास्त्रकारेणैव विरुद्धव्याप्तत्वमपास्यता विरुद्धव्याप्तौ धर्मावुक्त्वा विरुद्धाव्यभिचार्यवकाशो दत्त इति। न च वस्तुन्यस्य संभवः।

इत्युक्ता हेत्वाभासाः।

ननु च साधनावयवत्वाद्यथा हेतव उक्ताः तत्प्रसङ्गेन [च] हेत्वाभासाः, तथा साधनावयवत्वाद्दृष्टान्ता वक्तव्याः तत्प्रसङ्गेन च दृष्टान्ताभासाः; तत्कथं नोक्ता इत्याह—

**[८५] त्रिरूपो हेतुरुक्तः। तावतैवार्थप्रतीतिरिति न पृथग्दृष्टान्तो नाम साधनावयवः कश्चित्। तेन नास्य लक्षणं पृथगुच्यते। गतार्थत्वात्॥१२२॥**

त्रिरूपो हेतुरुक्तः तत्किं दृष्टान्तैः। स्यादेतत्। तावता नार्थप्रतीतिरित्याह– तावतैवेति। उक्तलक्षणेनैव हेतुना भवति साध्यप्रतीतिः। अतः स एव गमकः ततस्तद्वचनमेव साधनम्। न दृष्टान्तो नाम साधनस्यावयवः। यतश्चायं नावयवः तेन नास्य दृष्टान्तस्य लक्षणं हेतुलक्षणात्पृथक् उच्यते। कथं तर्हि हेतोर्व्याप्तिनिश्चयो यद्यदृष्टान्तको हेतुरिति चेत्। नोच्यते हेतुरदृष्टान्तक एव अपि तु न हेतोः पृथक् दृष्टान्तो नाम। हेत्वन्तर्भूत एव दृष्टान्तः अत एवोक्तं 'नास्य लक्षणमुच्यते' इति। यद्येवं हेतूपयोगिनोपि लक्षणं वक्तव्यमेवेत्याह– गतार्थत्वात्। गतः 'अर्थः' प्रयोजनमभिधेयं वा यस्य दृष्टान्तलक्षणस्य तस्य भावः तत्त्वं तस्मात्। दृष्टान्तलक्षणं ह्युच्यते दृष्टान्तप्रतीतिर्यथा

स्यात्। दृष्टान्तश्च हेतुलक्षणादेवावसितः। ततो दृष्टान्तलक्षणस्य यत् प्रयोजनं दृष्टान्तप्रतीतिः तत् 'गतं' निष्पन्नं, अभिधेयं वा 'गतं' ज्ञातं दृष्टान्ताख्यम्।

कथं गतार्थत्वमित्याह —

**हेतोः सपक्ष एव सत्त्वमसपक्षाच्च सर्वतो व्यावृत्ती रूपमुक्तमभेदेन। पुनर्विशेषेण कार्यस्वभावयोर्जन्मतन्मात्रानुबन्धौ दर्शनीयावुक्तौ। तच्च दर्शयता यत्र धूमस्तत्राग्निः असत्यग्नौ न क्वचिद्धूमो यथा महानसेतरयोः, यत्र कृतकत्वं तत्रानित्यत्वमनित्यत्वाभावे कृतकत्वासंभवो यथा घटाकाशयोरिति दर्शनीयम्। न ह्यन्यथा सपक्षविपक्षयोः सदसत्त्वे यथोक्तप्रकारे शक्ये दर्शयितुम्। तत्कार्यतानियमः कार्यलिङ्गस्य स्वभावलिङ्गस्य च स्वभावेन व्याप्तिः। अस्मिंश्चार्थे दर्शिते दर्शित एव दृष्टान्तो भवति; एतावन्मात्ररूपत्वात्तस्य॥ १२३॥**

हेतो रूपमुक्तं 'अभेदेन' सामान्येन। साधारणं कार्यस्वभावानुपलम्भानामेतल्लक्षणमित्यर्थः। किं पुनस्तत्। सपक्ष एव यत् सत्त्वं विपक्षाच्च सर्वस्मात् व्यावृत्तिर्या। रूपद्वयमेतत् [८६] अभेदेनोक्तम्। न च सामान्यमुक्तमपि शक्यं ज्ञातुम्। अतस्तदेव विशेषनिष्ठं वक्तव्यम्। अतः पुनरपि 'विशेषेण' विशेषवन्तौ जन्मतन्मात्रानुबन्धौ दर्शनीयावुक्तौ। कार्यस्य जन्म ज्ञातव्यमुक्तम्। जन्मनि हि ज्ञाते कार्यस्य सपक्ष एव सत्त्वं विपक्षाच्च सर्वस्माद्व्यावृत्तिः ज्ञाता भवति। स्वभावस्य तन्मात्रानुबन्धो दर्शनीय उक्तः। 'तत्' इति साधनं, तदेव 'तन्मात्रं' साधनमात्रं; साधनमात्रस्य 'अनुबन्धः' अनुगमनं साधनमात्रभावे भावः साध्यस्य। तन्मात्रभावित्वमेव हि साध्यस्य तादात्म्यम्। साधनस्य यदा स्वभावो ज्ञातो भवति तदा स्वभावहेतोः सपक्ष एव सत्त्वं विपक्षाच्च सर्वस्माद्व्यावृत्तिर्ज्ञाता भवति। तदेवं सामान्यलक्षणं विशेषात्मकं ज्ञातव्यम् नान्यथा। ततो विशेषलक्षणमुक्तम्।

किमतो यदि नामैवमित्याह—तच्च सामान्यलक्षणं दर्शयितुकामेन विशेषलक्षणं दर्शयता एवं दर्शनीयमिति संबन्धः। यत्र धूमस्तत्राग्निरिति कार्यहेतोर्व्याप्तिः दर्शिता। व्याप्तिश्च कार्यकारणभावसाधनात्प्रमाणात् निश्चीयते। ततो यथा महानस इति दर्शनीयम्। असत्यग्नौ न भवत्येव धूम इति व्यतिरेको दर्शितः। स च यथैतस्मिन्निति दर्शनीयः। वह्निनिवृत्तिर्हि धूमनिवृत्तौ नियता दर्शनीया। सा च महानसादितरत्र दर्शनीया।

यत्र कृतकत्वं तत्रानित्यत्वमिति स्वभावहेतोर्व्याप्तिः दर्शिता। अनित्यत्वाभावे न भवत्येव कृतकत्वमिति व्यतिरेको दर्शितः। व्याप्तेश्च साधकं प्रमाणं साधर्म्यदृष्टान्ते[न] दर्शनीयम्। प्रसिद्धव्याप्तिकस्य च हेतोः साध्यनिवृत्तौ निवृत्तिर्दर्शनीया। तदवश्यं 'यथा घटे' 'यथाकाशे' चेति दर्शनीयम्।

कस्मादेवमित्याह—न हीति यस्मादन्यथा सामान्यलक्षणरूपे सपक्षविपक्षयोः सदसत्त्वे 'यथोक्तप्रकारे' इति नियते। सपक्ष एव सत्त्वं विपक्षेऽसत्त्वमेवेति नियमो यथोक्तप्रकारः। ते न शक्ये दर्शयितुम्। न च विशेषलक्षणं अन्यथा शक्यं दर्शयितुम्। तस्य साध्यस्य कार्यं तत्कार्यं धूमः तस्य भावस्तत्कार्यता सैव नियमः, यतः तत्कार्यतया धूमो दाहेन नियतः। सोऽयं 'तत्कार्यतानियमः' विशेषलक्षणरूपः अन्यथा दर्शयितुमशक्यः; स्वभावलिङ्गस्य च स्वभावेन साध्येन व्याप्तिः विशेषलक्षणरूपा न शक्या दर्शयितुम्। यस्मात् कार्यकारणभावः तादात्म्यं च महानसे घटे च ज्ञातव्यं, तस्मात् व्याप्तिसाधनं प्रमाणं दर्शयता साधर्म्य [८७] दृष्टान्तो दर्शनीयः। वैधर्म्यदृष्टान्तस्तु प्रसिद्धे तत्कार्यत्वे कारणाभावे कार्याभावप्रतिपत्त्यर्थम्। तत एव नावश्यं वस्तु भवति। कारणाभावे कार्याभावो वस्तुन्यवस्तुनि वा भवति। ततो वस्त्ववस्तु वा वैधर्म्यदृष्टान्त इष्यते। तस्मात् दृष्टान्तव्यतिरेकेण हेतोरन्वयो व्यतिरेको वा न शक्यः दर्शयितुम्। अतो हेतुरूपाख्यानादेव हेतोर्व्याप्तिसाधनस्य प्रमाणस्य दर्शकः साधर्म्य-

दृष्टान्तः । प्रसिद्धव्याप्तिकस्य साध्याभावे हेत्वभावप्रदर्शनात् वैधर्म्य-दृष्टान्त उपादेय इति च दर्शितं भवति अस्मिंश्चार्थे दर्शिते दर्शित एव दृष्टान्तो भवति । योऽयमर्थो व्याप्तिसाधनप्रमाणप्रदर्शिनः कश्चि-दुपादेयो निवृत्तिप्रदर्शनश्चेत्यस्मिन्नर्थे प्रदर्शिते दर्शितो दृष्टान्त इत्याह— एतावदेव हि एतावन्मात्रं रूपं यस्य तस्य भावः तत्त्वं तस्मादिति । एतावद्देव हि साधर्म्य-रूपं दृष्टान्तस्य यदुत व्याप्तिसाधनप्रमाणदर्शनत्वं नाम साधर्म्य-दृष्टान्तस्य, प्रसिद्धव्याप्तिकस्य वा साध्यनिवृत्तौ साधननिवृत्तिप्रदर्शक-त्वमित्येतद्वैधर्म्यदृष्टान्तस्य । तच्च हेतुरूपाख्यानादेवाख्यातमिति किं दृष्टान्तलक्षणेन ।

**एतेनैव दृष्टान्तदोषा अपि निरस्ता भवन्ति ॥ १२४ ॥**

एतेनैव च हेतुरूपाख्यानात् दृष्टान्तत्वप्रदर्शनेन दृष्टान्तस्य दोषा दृष्टान्ताभासाः कथिता भवन्ति । तथाहि । पूर्वोक्तसिद्धये य उपादीयमानोऽपि दृष्टान्तो न समर्थः स्वकार्यं साधयितु स दृष्टान्त-दोष इति सामर्थ्यादुक्तं भवति ।

दृष्टान्ताभासानुदाहरति—

**यथा नित्यः शब्दोऽमूर्तत्वात् कर्मवत्परमाणुवद्घटव-दिति साध्यसाधनधर्मोभयविकला ॥ १२५ ॥**

यथेति । नित्यः शब्द इति नित्यत्वे शब्दस्य साध्ये अमूर्तत्वादिति हेतुः । साधर्म्येण कर्मवत्परमाणुवद्घटवदित्येते दृष्टान्ता उपन्यस्ताः । एते च दृष्टान्तदोषाः साध्यं च साधनं चोभयं चेति तैर्विकलाः । साध्यविकलं कर्म तस्यानित्वात् । [८८] साधनविकलः परमाणुः मूर्त-त्वात्परमाणूनाम् । असर्वगतं द्रव्यपरिमाणं मूर्तिः । असर्वगताश्च द्रव्यरूपाश्च परमाणवः । नित्यास्तु वैशेषिकैरिष्यन्ते । ततो न साध्य-विकलाः । घटस्तूभयविकलः, अनित्यत्वान्मूर्तत्वाच्च घटस्येति ।

**तथा संदिग्धसाध्यधर्मादयश्च । यथा रागादि-मानयं वचनाद्रथ्यापुरुषवत् । मरणधर्माऽयं पुरुषो रागादिमत्त्वाद्रथ्यापुरुषवत् । असर्वज्ञोऽयं रागादिमत्त्वाद्रथ्यापुरुषवदिति ॥ १२६ ॥**

तथा संदिग्धः साध्यधर्मो यस्मिन् स संदिग्धसाध्यधर्मः स आदिर्येषां ते तथोक्ताः। संदिग्धसाध्यधर्मः, संदिग्धसाधनधर्मः, संदिग्धोभयः। उदाहरणं-रागादिमानिति रागादिमत्त्वं साध्यं, वचनादिति हेतुः, रथ्यापुरुषवदिति दृष्टान्तः। रागादिमत्त्वं संदिग्धम्। मरणं धर्मो ऽस्येति मरणधर्मा तस्य भावो मरणधर्मत्वं साध्यम्। 'अयं पुरुषः' इति धर्मी 'रागादिमत्त्वात्' इति हेतुः। रथ्यापुरुषे दृष्टान्ते संदिग्धं साधनं, साध्यं तु निश्चितं मरणधर्मत्वमिति। असर्वज्ञ इति असर्वज्ञत्वं साध्यम्। रागादिमत्त्वादिति हेतुः। तदुभयमपि रथ्यापुरुषे दृष्टान्ते संदिग्धं-असर्वज्ञत्वं रागादिमत्त्वं चेति।

तथा—

**अनन्वयोऽप्रदर्शितान्वयश्च। यथा यो वक्ता स रागादिमानिष्टपुरुषवत्। अनित्यः शब्दः कृतकत्वाद्धटवदिति ॥१२७॥**

अनन्वय इति। यस्मिन्दृष्टान्ते साध्यसाधनयोः संभवमात्रं दृश्यते न तु साध्येन व्याप्तो हेतुः सः 'अनन्वयः'। अप्रदर्शितान्वयश्च, यस्मिन्दृष्टान्ते विद्यमानोऽप्यन्वयः न प्रदर्शितो वक्त्रा सः 'अप्रदर्शितान्वयः'। अनन्वयमुदाहरति-यथेति। यो वक्तेति वक्तृत्वमनूद्य स रागादिमानिति रागादिमत्त्वं विहितम्। ततो वक्तृत्वस्य रागादिमत्त्वं प्रति नियमः। तेन व्याप्तिरुक्ता। इष्टपुरुषवदिति। इष्टग्रहणेन प्रतिवाद्यपि गृह्यते वाद्यपि। तेन वक्तृत्वरागादिमत्त्वयोः सत्त्वमात्रं इष्टे पुरुषे सिद्धम्। व्याप्तिस्तु न सिद्धा। तेनानन्वयो दृष्टान्त इति।

अनित्यः शब्द इत्यनित्यत्वं साध्यम्, कृतकत्वादि हेतुः। [८९] घटवदिति दृष्टान्तेन न प्रदर्शितोऽन्वयः। इह यद्यपि कृतकत्वेन घटसदृशः शब्दः तथापि न अनित्यत्वेनापि सदृशो प्रत्येतुं शक्यः, अतिप्रसङ्गात्। यदि तु कृतकत्वमनित्यत्वस्वभावं विज्ञातं भवति एवं कृतकत्वादनित्यत्वप्रतीतिः स्यात्। तस्मात् यत् कृतकं तत् अनित्यमिति कृतकत्वं अनित्यत्वनियतमभिधाय नियमसाधनाय अन्वयवा-

कथार्थप्रतिपात्तिविषयो दृष्टान्त उपादेयः । स च प्रदर्शितान्वय एव । अनेन त्वन्वयवाक्यमनुक्त्वैव दृष्टान्त उपात्तः । ईदृशश्च साधर्म्यमात्रेणैवोपयोगी । न च साधर्म्यात् साध्यसिद्धिः । अतो ऽन्वयार्थो दृष्टान्तः, तदर्थश्चानेन नोपात्तः ; साधर्म्यार्थश्चोपात्तो निरुपयोग इति वक्तृदोषादयं दृष्टान्तदोषः । वक्त्रा ह्यत्र परः प्रतिपादयितव्यः । ततो यदि नाम न दुष्टं वस्तु तथापि वक्त्रा दुष्टं दर्शितमिति दुष्टमेव ।

**तथा विपरीतान्वयः यदनित्यं तत्कृतकम् ॥ १२८ ॥**

तथा विपरीतो ऽन्वयो यस्मिन्दृष्टान्ते स तथोक्तः । तमेवोदाहरति । यदनित्यं तत्कृतकमिति । कृतकत्वं अनित्यत्वानियतं दृष्टान्ते दर्शनीयम् । एवं कृतकत्वादनित्यत्वगतिः स्यात् । अत्र तु अनित्यत्वं कृतकत्वनियतं दर्शितम् ; कृतकत्वं तु अनियतमेव अनित्यत्वे । ततो यादृशमिह कृतकत्वं अनियतं अनित्यत्वे प्रदर्शितं तादृशात् नास्ति अनित्यत्वप्रतीतिः । तथा हि । 'यदनित्यं' इत्यनित्यत्वं अनूद्य 'तत्कृतकं' इति कृतकत्वं विहितम् । अतः अनित्यत्वं नियतमुक्तं कृतकत्वे न तु कृतकत्वं अनित्यत्वे । ततो यथा अनित्यत्वात् अनियतात्प्रयत्नानन्तरीयकत्वे न प्रयत्नानन्तरीयकत्वप्रतीतिः तद्वत् कृतकत्वात् अनित्यत्वप्रतिपत्तिः न स्यात् ; अनित्यत्वे अनियतत्वात् कृतकत्वस्य । यद्यपि च कृतकत्वं वस्तुस्थित्या अनित्यत्वे नियतं तथापि अनियतं वक्त्रा दर्शितम् । अतः तत् स्वयं न दुष्टमपि वक्तृदोषात् दुष्टम् । तस्मात् विपरीतान्वयोऽपि वक्तुरपराधात् न वस्तुतः । परार्थानुमाने च वक्तुरपि दोषश्चिन्त्यते ।

**इति साधर्म्येण ॥ १२९ ॥**

इति साधर्म्येण नव दृष्टान्तदोषा उक्ताः ।

[९०] वैधर्म्येणापि नव दृष्टान्तदोषान्वक्तुकाम आह—

**वैधर्म्येणापि परमाणुवत्कर्मवदाकाशवदिति साध्याद्यव्यतिरेकिणः ॥ १३० ॥**

नित्यत्वे शब्दस्य साध्ये अमूर्तत्वे हेतौ परमाणुर्वैधर्म्यदृष्टान्तः साध्याव्यतिरेकी, नित्यत्वात्परमाणूनाम् । कर्म साधनाव्यतिरेकि, अमू-

तत्त्वात्कर्मणः। आकाशमुभयव्यतिरेकी, नित्यत्वात् अमूर्तत्वाच्च। साध्यं आदिर्येषां तानि साध्यादीनि साध्यसाधनोभयानि तेषां 'अव्यतिरेकः' वृत्त्यभावः स येषामस्ति ते साध्याद्यव्यतिरेकिणः। ते चोदाहृताः।

अपरानुदाहर्तुमाह—

**तथा संदिग्धसाध्यव्यतिरेकादयः यथाऽसर्वज्ञाः कपिलादयोऽनाप्ता वा अविद्यमानसर्वज्ञताप्ततालिङ्गभूतप्रमाणातिशयशासनत्वादिति। अत्र वैधर्म्योदाहरणं यः सर्वज्ञ आप्तो वा स ज्योतिर्ज्ञानादिकमुपदिष्टवान् तद्यथा ऋषभवर्धमानादिरिति। तत्रासर्वज्ञतानाप्ततयोः साध्यधर्मयोः संदिग्धो व्यतिरेकः ॥ १३१ ॥**

तथेति। साध्यस्य व्यतिरेकः साध्यव्यतिरेकः संदिग्धः साध्यव्यतिरेको यस्मिन् स संदिग्धसाध्यव्यतिरेकः स आदिर्येषां ते तथोक्ताः। संदिग्धसाध्यव्यतिरेकमुदाहर्तुमाह—यथेति। असर्वज्ञा इत्येकं साध्यम्; 'अनाप्ताः' अक्षीणदोषा इति द्वितीयम्। कपिलादय इति धर्मी। अविद्यमानसर्वज्ञतेत्यादि हेतुः। सर्वज्ञता च आप्तता च, तयोः 'लिङ्गभूतः प्रमाणातिशयः' लिङ्गात्मकः प्रमाणविशेषः। अविद्यमानः सर्वज्ञताप्ततालिङ्गभूतः प्रमाणातिशयो यस्मिंस्तत्तथोक्तं शासनं, तादृशं शासनं येषां ते तथोक्ताः तेषां भावः तत्त्वं, तस्मात्। प्रमाणातिशयो ज्योतिर्ज्ञानोपदेश इहाभिप्रेतः। यदि हि कपिलादयः सर्वज्ञा आप्ता वा स्युः तदा ज्योतिर्ज्ञानादिकं कस्मात् नोपदिष्टवन्तः? न चोपदिष्टवन्तः। तस्मात् न सर्वज्ञा आप्ता वा।

[९१] 'अत्र' प्रमाणे वैधर्म्योदाहरणं यः सर्वज्ञ आप्तो वा स ज्योतिर्ज्ञानादिकं सर्वज्ञताप्ततालिङ्गभूतमुपदिष्टवान्। यथा ऋषभो वर्धमानश्च तावादी यस्य स 'ऋषभवर्धमानादिः' दिगम्बराणां शास्ता सर्वज्ञ आप्तश्चेति। तदिह वैधर्म्योदाहरणात् ऋषभादेः असर्वज्ञत्वस्य अनाप्तताया‌श्च 'व्यतिरेकः' व्यावृत्तिः संदिग्धा; यतो ज्योतिर्ज्ञानं चोपदिशेत् असर्वज्ञश्च भवेत् अनाप्तो वा; कोऽत्र

विरोधः। नैमित्तिकमेतत् ज्ञानं व्यभिचारि न सर्वज्ञत्वमनुमापयेत्।

**संदिग्धसाधनव्यतिरेको यथा न त्रयीविदा ब्राह्मणेन ग्राह्यवचनः कश्चिद्विवक्षितः पुरुषो रागादिमत्त्वादिति। अत्र वैधर्म्योदाहरणं ये ये ग्राह्यवचना न ते रागादिमन्तः तद्यथा गौतमादयो धर्मशास्त्राणां प्रणेतार इति गौतमादिभ्यो रागादिमत्त्वस्य साधनधर्मस्य व्यावृत्तिः संदिग्धा॥ १३२॥**

संदिग्धः साधनव्यतिरेको यस्मिन् स तथोक्तः। तमुदाहरति–यथेति। ऋक्सामयजूंषि त्रीणि 'त्रयी' तां वेत्ति [ स ] त्रयीवित्। तेन न ग्राह्यं वचनं यस्येति साध्यम्। विवक्षित इति कपिलादिः धर्मी। रागादिमत्त्वादिति हेतुः। 'अत्र' प्रमाणे 'वैधर्म्योदाहरणं' साध्याभावः साधनाभावेन व्याप्तो यत्र दर्श्यते तत् वैधर्म्योदाहरणम्। ग्राह्यं वचनं येषां ते ग्राह्यवचना इति साध्यनिवृत्तिमनूद्य न ते रागादिमन्त इति साधनाभावो विहितः। गौतम आदिर्येषां ते तथोक्ता मन्वादयो 'धर्मशास्त्राणि' स्मृतयः तेषां कर्तारः। त्रयीविदा हि ब्राह्मणेन ग्राह्यवचना धर्मशास्त्रकृतो वीतरागाश्च। 'ते' इति धर्मी। व्यतिरेकविषयो [ ऽत्र ] गौतमादय इति। गौतमादिभ्यो रागादिमत्त्वस्य साधनस्य निवृत्तिः संदिग्धा। यद्यपि ते ग्राह्यवचनाः त्रयीविदा तथापि किं सरागा उत वीतरागा इति संदेहः।

**संदिग्धोभयव्यतिरेको यथा ऽवीतरागाः कपिलादयः परिग्रहाग्रहयोगादिति। अत्र वैधर्म्योदाहरणं यो वीतरागो न तस्य परिग्रहाग्रहो यथा ऋषभादेरिति। ऋषभादेरवीतरागत्वपरिग्रहाग्रहयोगयोः साध्यसाधनधर्मयोः संदिग्धो व्यतिरेकः॥ १३३॥**

संदिग्ध उभयोर्व्यतिरेको यस्मिन् स तथोक्तः। तमुदाहरति–[९२] यथेति। अवीतरागा इति रागादिमत्त्वं साध्यम्। कपिलादय

इति धर्मी । 'परिग्रहः' लभ्यमानस्य स्वीकारः प्रथमः । स्वीकारादूर्ध्वं यत् गार्ध्यं मात्सर्यं स 'आग्रहः' । परिग्रहश्च आग्रहश्च ताभ्यां योगात् । कपिलादयो लभ्यमानं स्वीकुर्वन्ति स्वीकृतं न मुञ्चन्तीति ते रागादिमन्तो गृह्यन्ते ।

'अत्र' प्रमाणे 'वैधर्म्योदाहरणं' यत्र साध्याभावे साधनाभावो दर्शयितव्यः । यो वीतराग इति साध्याभावमनूद्य, न तस्य परिग्रहाग्रहाविति साधनाभावो विहितः । यथा ऋषभादेरिति दृष्टान्तः । एतस्मात् ऋषभादेः दृष्टान्तात् अवीतरागत्वस्य साध्यस्य परिग्रहायोगस्य च साधनस्य निवृत्तिः संदिग्धा । ऋषभादीनां हि परिग्रहाग्रहयोगोऽपि संदिग्धो वीतरागत्वं च । यदि नाम तत्सिद्धान्ते वीतरागाश्च निष्परिग्रहाश्च पठ्यन्ते तथापि संदेह एव ।

अपरानपि त्रीनुदाहर्तुमाह—

**अव्यतिरेको यथाऽवीतरागो वक्तृत्वात् । वैधर्म्योदाहरणं यत्रावीतरागत्वं नास्ति न स वक्ता यथा उपलखण्ड इति । यद्यप्युपलखण्डादुभयं व्यावृत्तं तथापि सर्वो वीतरागो न वक्तेति व्याप्त्या व्यतिरेकासिद्धेरव्यतिरेकः ॥ १३४ ॥**

अविद्यमानो व्यतिरेको यस्मिन् सः अव्यतिरेकः । अवीतराग इति रागादिमत्त्वं साध्यम् । वक्तृत्वादिति हेतुः । इह व्यतिरेकमाह । यत्रावीतरागत्वं नास्तीति साध्याभावानुवादः । तत्र वक्तृत्वमपि नास्तीति साधनाभावविधिः । तेन साधनाभावेन साध्याभावो व्याप्त उक्तः । दृष्टान्तो यथोपलखण्ड इति ॥ कथमयमव्यतिरेकः यावता उपलखण्डादुभयं निवृत्तम् ? किमतः । यद्यप्युपलखण्डादुभयं व्यावृत्तं सरागत्वं च वक्तृत्वं च ; तथापि व्याप्त्या व्यतिरेको यः तस्य असिद्धेः कारणात् अव्यतिरेकोऽयम् । कीदृशी पुनः व्याप्तिरित्याह—सर्वो वीतराग इति साध्याभावानुवादः । न वक्तेति साधनाभावविधिः । तेन साध्याभावः साधनाभावनियतः ख्यापितो भवतीति । ईदृशी व्याप्तिः । तया व्यतिरेको न सिद्धः । [९३] अस्य चार्थस्य प्रसिद्धये दृष्टान्तः । त[स्मा]त्

स्वकार्याकरणात् दुष्टः ।

**अप्रदर्शितव्यतिरेको यथा अनित्यः शब्दः कृतकत्वादाकाशवदिति ॥ १३५ ॥**

अप्रदर्शितो व्यतिरेको यस्मिन् स तथोक्तः । अनित्यः शब्दः इत्यनित्यत्वं साध्यम् । कृतकत्वादिति हेतुः । आकाशवदिति वैधर्म्येण दृष्टान्तः । इह परार्थानुमाने परस्मादर्थः प्रतिपत्तव्यः । स शुद्धोऽपि स्वतः, यदि परेण अशुद्धः ख्याप्यते, स तावत् यथा प्रकाशितः तथा न युक्तः ; यथा युक्तः तथा न प्रकाशितः । प्रकाशितश्च हेतुः । अतो वक्तुरपराधादपि परार्थानुमाने हेतुर्दृष्टान्तो वा दुष्टः स्यादपि । न च सादृश्यादसादृश्याद्वा साध्यप्रतिपत्तिः अपि तु साध्यनियतात् हेतोः । अतः साध्यनियतो हेतुः अन्वयवाक्येन व्यतिरेकवाक्येन च वक्तव्यः । अन्यथा गमको नोक्तः स्यात् । स तथोक्तो दृष्टान्तेन सिद्धो दर्शयितव्यः । तस्मात् दृष्टान्तो नाम अन्वयव्यतिरेकवाक्यार्थप्रदर्शनः । न चेह व्यतिरेकवाक्य प्रयुक्तम् । अतो वैधर्म्यदृष्टान्तः इह असादृश्यभावेन साधक उपन्यस्तः । न च तथा साधकः । व्यतिरेकविषयत्वेन स साधकः । न च तथा उपन्यस्त इति । अतः अप्रदर्शितव्यतिरेको वक्तुरपराधात् दुष्टः ।

वैधर्म्येणापि—

**विपरीतव्यतिरेको यथा यदकृतकं तन्नित्यं भवतीति ॥ १३६ ॥**

विपरीतो व्यतिरेको यस्मिन् वैधर्म्यदृष्टान्ते स तथोक्तः । तमुदाहरति--यदकृतकमित्यादि । इह अन्वयव्यतिरेकवाक्याभ्यां साध्यनियतो हेतुः दर्शयितव्यः । यदा च साध्यनियतो हेतुः दर्शयितव्यः तदा व्यतिरेकवाक्ये साध्याभावः साधनाभावे नियतो दर्शयितव्यः । एवं हि हेतुः साध्यनियतो दर्शितः स्यात् । यदि तु साध्याभावः साधनाभावे नियतो नाख्यायते, साधनसत्तायामपि साध्याभावः संभाव्येत । तथा च साधनं साध्यनियतं न प्रतीयेत । तस्मात् साध्याभावः साधनाभावे नियतो वक्तव्यः ।

विपरीतव्यतिरेके च साधनाभावः साध्याभावे नियत उच्यते, न साध्याभावः साधनाभावे । तथा हि । 'यदकृतकं' इति साधनाभावमनूद्य 'तन्नित्यं' इति साध्याभावविधिः । ततोऽयमर्थः । अकृतको नित्य एव । तथा च सति अकृतकत्वं नित्यत्वे साध्याभावे नियतमुक्तं [९४] न नित्यत्वं साधनाभावे । ततो न साध्यनियतं हेतुं व्यतिरेकवाक्यमाह । तथा च विपरीतव्यतिरेकोऽपि वक्तुरपराधात् दुष्टः ।

दृष्टान्तदोषानुदाहृत्य दुष्टत्वनिबन्धनत्वं दर्शयितुमाह—

**न ह्येभिर्दृष्टान्ताभासैर्हेतोः सामान्यलक्षणं सपक्ष एव सत्त्वं विपक्षे च सर्वत्रासत्त्वमेव निश्चयेन शक्यं दर्शयितुं विशेषलक्षणं वा । तदर्थापत्त्यैषां निरासो वेदितव्यः ॥ १३७ ॥**

न ह्येभिरिति । साध्यनियतहेतुप्रदर्शनाय हि दृष्टान्ता वक्तव्याः । एभिश्च हेतोः सपक्ष एव सत्त्वं विपक्षे च सर्वत्रासत्त्वमेव यत् सामान्यलक्षणं तत् निश्चयेन न शक्यं दर्शयितुम् । ननु च सामान्यलक्षणं विशेषनिष्ठमेव प्रतिपत्तव्यं न स्वत एवेत्याह—विशेषलक्षणं वा । यदि विशेषलक्षणं प्रतिपादयितुं शक्येत, स्यादेव सामान्यलक्षणप्रतिपत्तिः । विशेषलक्षणमेव तु न शक्यं एभिः प्रतिपादयितुम् । ['तत्'] तस्मात् 'अर्थापत्त्या' सामर्थ्येन एषां निराकरणं द्रष्टव्यम् । साध्यनियतसाधनप्रतिपत्तये उपात्ताः तदसमर्थाः दुष्टाः, स्वकार्याकरणादिति सामर्थ्यम् ।

इयता साधनमुक्तम् । दूषणं वक्तुमाह—

**दूषणा न्यूनताद्युक्तिः ॥ १३८ ॥**

दूषणा का द्रष्टव्या ? न्यूनतादीनां उक्तिः । उच्यते ऽनयेति 'उक्तिः' वचनं, न्यूनतादिवचनम् ।

दूषणं विवरीतुमाह—

**ये पूर्वं न्यूनतादयः साधनदोषा उक्तास्तेषामुद्भावनं दूषणम् । तेन परेष्टार्थसिद्धिप्रतिबन्धात् ॥ १३९ ॥**

ये पूर्वं न्यूनतादयः असिद्धविरुद्धानैकान्तिका उक्ताः तेषां 'उद्भावनं' वचनं यत् तत् दूषणम्। ननु च न्यूनतादयो न विपर्ययसाधनाः, तत् कथं दूषणमित्याह–[९५] 'तेन' न्यूनतादिवचनेन परेषामिष्टश्चासौ अर्थश्च तस्य 'सिद्धिः' निश्चयः तस्याः प्रतिबन्धात्। नावश्यं विपर्ययसाधनादेव दूषणं विरुद्धवत् अपि तु परस्याभिप्रेतनिश्चयनिबन्धात् निश्चयाभावो भवति निश्चयाविपर्यय इत्यस्त्येव विपर्ययसिद्धिरिति।

उक्ता दूषणा।

**दूषणाभासास्तु जातयः ॥ १४० ॥**

दूषणाभासा इति। दूषणवदाभासन्त इति दूषणाभासाः। के ते। जातयः। जातिशब्दः सादृश्यवचनः। उत्तरसदृशानि जात्युत्तराणि। उत्तरस्थानप्रयुक्तत्वात् उत्तरसदृशानि जात्युत्तराणि।

तदेव उत्तरसादृश्यं उत्तरस्थानप्रयुक्तत्वेन दर्शयितुमाह–

**अभूतदोषोद्भावनानि जात्युत्तराणि ॥ १४१ ॥**

'अभूतस्य' असत्यस्य दोषस्य 'उद्भावनानि' उद्भाव्यत एतैरिति 'उद्भावनानि' वचनानि। तानि जात्युत्तराणि। 'जात्या' सादृश्येन उत्तराणि जात्युत्तराणीति।

कतिपयपदवस्तुव्याख्यया यन्मयाप्तं
कुशलममलमिन्दोरंशुवन्न्यायबिन्दोः।
पदमजरमवाप्य ज्ञानधर्मोत्तरं य-
ज्जगदुपकृतिमात्रव्यापृतिः स्यामतोऽहम् ॥

**आचार्यधर्मोत्तरपादविरचितायां न्यायबिन्दुटीकायां**
**तृतीयः [ परार्थानुमान ] परिच्छेदः।**

**समाप्तेयं न्यायबिन्दुटीका**
**कृतिराचार्यधर्मोत्तरस्य ॥०॥**

---

सहस्रमेकं श्लोकानां तथा शतचतुष्टयम्।
सप्तसप्ततिसंयुक्तं निपुणं परिपिण्डितम् ॥

धर्मकीर्त्तिप्रणीतं

# न्यायबिन्दुप्रकरणम् ।

## प्रथमः परिच्छेदः ।

सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति तद्व्युत्पाद्यते । द्विविधं सम्यग्ज्ञानं प्रत्यक्षमनुमानं च । तत्र प्रत्यक्षं कल्पनापोढमभ्रान्तम् । अभिलापसंसर्गयोग्यप्रतिभासप्रतीतिः कल्पना । तया रहितं तिमिराशुभ्रमणनौयानसंक्षोभाद्यनाहितविभ्रमं [ च ] ज्ञानं प्रत्यक्षम् ।

तच्चतुर्विधम् । इन्द्रियज्ञानम, स्वविषयानन्तरविषयसहकारिणेन्द्रियज्ञानेन समनन्तरप्रत्ययेन जनितं तन्मनोविज्ञानम्, सर्वचित्तचैत्तानामात्मसंवेदनम्, भूतार्थभावनाप्रकर्षपर्यन्तजं योगिज्ञानं चेति ।

तस्य विषयः स्वलक्षणम् । यस्यार्थस्य संनिधानासंनिधानाभ्यां ज्ञानप्रतिभासभेदः तत्स्वलक्षणम् । तदेव परमार्थसत् अर्थक्रियासामर्थ्यलक्षणत्वादेव वस्तुनः । अन्यत्सामान्यलक्षणम् । सोऽनुमानस्य विषयः । तदेव च प्रत्यक्षं ज्ञानं प्रमाणफलम् । अर्थप्रतीतिरूपत्वात् । अर्थसारूप्यमस्य प्रमाणम् । तद्वशादर्थप्रतीतिसिद्धेरिति ॥

---

## द्वितीयः परिच्छेदः ।

अनुमानं द्विधा । स्वार्थं परार्थं च । तत्र स्वार्थं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानम् । प्रमाणफलव्यवस्थाऽत्रापि प्रत्यक्षवत् । त्रैरूप्यं पुनः लिङ्गस्यानुमेये सत्त्वमेव, सपक्षे एव सत्त्वम्, असपक्षे चासत्त्वमेव निश्चितम् ।

अनुमेयोऽत्र जिज्ञासितविशेषो धर्मी । साध्यधर्मसामान्येन समानोऽर्थः सपक्षः । न सपक्षोऽसपक्षः ततोऽन्यः तद्विरुद्धः तदभावश्चेति । त्रिरूपाणि च त्रीण्येव लिङ्गानि । अनुपलब्धिः स्वभावकार्ये चेति ।

तत्रानुपलब्धिर्यथा न प्रदेशविशेषे क्वचित् घटः उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति । उपलब्धिलक्षणप्राप्तिः उपलम्भप्रत्ययान्तरसाकल्यं स्वभावविशेषश्च । यः स्वभावः सत्स्वन्येषूपलम्भप्रत्ययेषु सन् प्रत्यक्ष एव भवति स स्वभाव[ विशेष ]ः ।

स्वभावः स्वसत्तामात्रभाविनि साध्यधर्मे हेतुः। यथा वृक्षोऽयं शिंशपात्वादिति। कार्यं यथाऽग्निरत्र धूमादिति। अत्र द्वौ वस्तुसाधनौ। एकः प्रतिषेधहेतुः। स्वभावप्रतिबन्धे हि सति अर्थोऽर्थं गमयेत्। तदप्रतिबद्धस्य तदव्यभिचारनियमाभावात्। स च प्रतिबन्धः साध्येऽर्थे लिङ्गस्य, वस्तुतः तादात्म्यात् साध्यादर्थादुत्पत्तेश्च। अतत्स्वभावस्यातदुत्पत्तेश्च तत्राप्रतिबद्धस्वभावत्वात्। ते च तादात्म्यतदुत्पत्ती स्वभावकार्ययोरेवेति ताभ्यामेव वस्तुसिद्धिः।

प्रतिषेधसिद्धिरपि यथोक्ताया एवानुपलब्धेः। सति वस्तुनि तस्या असंभवात्। अन्यथा चानुपलब्धिलक्षणप्राप्तेषु देशकालस्वभावविप्रकृष्टेष्वर्थेष्वात्मप्रत्यक्षनिवृत्तेः अभावनिश्चयाभावात्। अमूढस्मृतिसंस्कारस्यातीतस्य वर्तमानस्य च प्रतिपत्तृप्रत्यक्षस्य निवृत्तिरभावव्यवहारसाधनी। तस्या एवाभावनिश्चयात्।

सा च प्रयोगभेदादेकादशप्रकारा।

१. स्वभावानुपलब्धिर्यथा नात्र धूम उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति। २. कार्यानुपलब्धिर्यथा नेहाप्रतिबद्धसामर्थ्यानि धूमकारणानि सन्ति धूमाभावात्। ३. व्यापकानुपलब्धिर्यथा नात्र शिंशपा वृक्षाभावादिति। ४. स्वभावविरुद्धोपलब्धिर्यथा नात्र शीतस्पर्शोऽग्नेरिति। ५. विरुद्धकार्योपलब्धिर्यथा नात्र शीतस्पर्शो धूमादिति। ६. विरुद्धव्याप्तोपलब्धिर्यथा न ध्रुवभावी भूतस्यापि भावस्य विनाशो हेत्वन्तरापेक्षणादिति। ७. कार्यविरुद्धोपलब्धिर्यथा नेहाप्रतिबद्धसामर्थ्यानि शीतकारणानि सन्ति अग्नेरिति। ८ व्यापकविरुद्धोपलब्धिर्यथा नात्र तुषारस्पर्शोऽग्नेरिति। ९. कारणानुपलब्धिर्यथा नात्र धूमोऽग्न्यभावादिति। १०. कारणविरुद्धोपलब्धिर्यथा नास्य रोमहर्षादिविशेषाः संनिहितदहनविशेषत्वादिति। ११. कारणविरुद्धकार्योपलब्धिर्यथा न रोमहर्षादिविशेषयुक्तपुरुषवानयं प्रदेशो धूमादिति।

इमे सर्वे कार्यानुपलब्ध्यादयो दशानुपलब्धिप्रयोगाः स्वभावानुपलब्धौ संग्रहमुपयान्ति। पारम्पर्येणार्थान्तरविधिप्रतिषेधाभ्यां प्रयोगभेदेऽपि प्रयोगदर्शनाभ्यासात् स्वयमप्येवं व्यवच्छेदप्रतीतिर्भवतीति स्वार्थेऽप्यनुमानेऽस्याः प्रयोगनिर्देशः। सर्वत्र चास्यामभावव्यवहारसाधन्यामनुपलब्धौ येषां स्वभावविरुद्धादीनामुपलब्ध्या कारणादीनामनुपलब्ध्या

च प्रतिषेध उक्तः तेषामुपलब्धिलक्षणप्राप्तानामेवोपलब्धिरनुपलब्धिश्च वेदितव्या। अन्येषां विरोधकार्यकारणभावासिद्धेः।

विप्रकृष्टविषयानुपलब्धिः प्रत्यक्षानुमाननिवृत्तिलक्षणा संशयहेतुः। प्रमाणनिवृत्तावप्यर्थाभावासिद्धेरिति।

---

## तृतीयः परिच्छेदः।

त्रिरूपलिङ्गाख्यानं परार्थानुमानम्। कारणे कार्योपचारात्। तद्द्विविधं प्रयोगभेदात्। साधर्म्यवद्वैधर्म्यवच्चेति। नानयोरर्थतो भेदः कश्चिदन्यत्र प्रयोगभेदात्।

तत्र साधर्म्यवत्--उपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः सिद्धः, यथाऽन्यः कश्चिद्दृष्टः शशविषाणादिः, नोपलभ्यते च क्वचित्प्रदेशविशेष उपलब्धिलक्षणप्राप्तो घट इति। तथा स्वभावहेतोः प्रयोगः--यत्सत्तत्सर्वमनित्यं यथा घटादिरिति शुद्धस्य स्वभावहेतोः प्रयोगः। यदुत्पत्तिमत्तदनित्यमिति स्वभावभूतधर्मभेदेन स्वभावस्य प्रयोगः। यत्कृतकं तदनित्यमित्युपाधिभेदेन। अपेक्षितपरव्यापारो हि भावः स्वभावनिष्पत्तौ कृतक इति। एवं प्रत्ययभेदभेदित्वादयो द्रष्टव्याः। सदुत्पत्तिमान्कृतको वा शब्द इति पक्षधर्मोपदर्शनम्। सर्व एते साधनधर्मा यथास्वं प्रमाणैः सिद्धसाधनधर्ममात्रानुबन्धे एव साध्यधर्मेऽवगन्तव्याः तत्स्वभावत्वात् स्वभावस्य च हेतुत्वात्। वस्तुतः तयोस्तादात्म्यात् तन्निष्पत्तावनिष्पन्नस्य तत्स्वभावत्वाभावात्; व्यभिचारसंभवाच्च। कार्यहेतोरपि प्रयोगः- यत्र धूमस्तत्राग्निः यथा महानसादौ, अस्ति चेह धूम इति। इहापि सिद्धे एव कार्यकारणभावे कारणे साध्ये कार्यहेतुर्वक्तव्यः।

वैधर्म्यवतः प्रयोगः- यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एव, यथा नीलादिविशेषः। न चैवमिहोपलब्धिलक्षणप्राप्तस्य सत उपलब्धिर्घटस्येत्यनुपलब्धिप्रयोगः। असत्यनित्यत्वे नास्ति सत्त्वमुत्पत्तिमत्त्वं कृतकत्वं वा, असंश्च शब्द उत्पत्तिमान्कृतको वेति स्वभाव हेतोः प्रयोगः। असत्यग्नौ न भवत्येव धूमः अत्र चास्तीति कार्यहेतोः प्रयोगः।

साधर्म्येणापि हि प्रयोगेऽर्थाद्वैधर्म्यगतिरिति। असति तस्मिन् साध्येन हेतोरन्वयाभावात्। तथा वैधर्म्येणाप्यन्वयगतिः। असति तस्मिन् साध्याभावे हेत्वभावस्यासिद्धेः। न हि स्वभावप्रतिबन्धेऽसति एकस्य निवृत्तावपरस्य नियमेन निवृत्तिः। स च द्विप्रकारः सर्वस्य, तादात्म्यलक्षणस्तदुत्पत्तिलक्षणश्चेत्युक्तम्। तेन हि निवृत्तिं कथयता प्रतिबन्धो दर्शनीयः। तस्मान्निवृत्तिवचनमाक्षिप्तप्रतिबन्धोपदर्शनमेव भवति। यच्च प्रतिबन्धोपदर्शनं तदेवान्वयवचनमित्येकेनापि वाक्येनान्वयमुखेन व्यतिरेकमुखेन वा प्रयुक्तेन सपक्षासपक्षयोर्लिङ्गस्य सदसत्त्वख्यापनं कृतं भवतीति नावश्यं वाक्यद्वयप्रयोगः।

अनुपलब्धावपि - यत्सदुपलब्धिलक्षणप्राप्तं तदुपलभ्यत एवेत्युक्तेऽनुपलभ्यमानं तादृशमसदिति प्रतीतेरन्वयसिद्धिः। द्वयोरप्यनयोः प्रयोगे नावश्यं पक्षनिर्देशः। यस्मात्साधर्म्यवत्प्रयोगेऽपि यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते सोऽसद्व्यवहारविषयः ; नोपलभ्यते चात्रोपलब्धिलक्षणप्राप्तो घट इत्युक्ते सामर्थ्यादेव नेह घट इति भवति। तथा वैधर्म्यवत्प्रयोगेऽपि यः सद्व्यवहारविषय उपलब्धिलक्षणप्राप्तः स उपलभ्यत एव। न तथात्र तादृशो घट उपलभ्यत इत्युक्ते सामर्थ्यादेव नेह सद्व्यवहारविषय इति भवति।

कीदृशः पुनः पक्ष इति निर्देश्यः। स्वरूपेणैव स्वयमिष्टोऽनिराकृतः पक्ष इति। स्वरूपेणेति साध्यत्वेनेष्टः। स्वरूपेणैवेति साध्यत्वेनेष्टो न साधनत्वेनापि। यथा शब्दस्यानित्यत्वे साध्ये चाक्षुषत्वं हेतुः शब्देऽसिद्धत्वात्साध्यं, न पुनस्तदिह साध्यत्वेनैवेष्टं, साधनत्वेनाप्यभिधानात्। स्वयमिति वादिना, यः तदा साधनमाह। एतेन यद्यपि क्वचिच्छास्त्रे स्थितः साधनमाह, तच्छास्त्रकारेण तस्मिन्धर्मिण्यनेकधर्माभ्युपगमेऽपि, यः तदा तेन वादिना धर्मः स्वयं साधयितुमिष्टः स एव साध्यो नेतर इत्युक्तं भवति। इष्ट इति यत्रार्थे विवादेन साधनमुपन्यस्तं तस्य सिद्धिमिच्छता सः, अनुक्तोऽपि वचनेन, साध्यः, तदधिकरणत्वाद्विवादस्य। यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनाद्यङ्गवदिति। अत्र आत्मार्था इत्यनुक्तावपि आत्मार्थता। तेन नोक्तमात्रमेव साध्यमित्युक्तं भवति। अनिराकृत इति। एतल्लक्षणयोगेऽपि यः साधयितुमिष्टोऽप्यर्थः प्रत्यक्षानुमान-

प्रतीतिस्ववचनैः निराक्रियते न स पक्ष इति प्रदर्शनार्थम् । तत्र प्रत्यक्षनिराकृतो यथा अश्रावणः शब्द इति। अनुमाननिराकृतो यथा नित्यः शब्द इति । प्रतीतिनिराकृतो यथा अचन्द्रः शशीति । स्ववचननिराकृतो यथा नानुमानं प्रमाणम् । इति चत्वारः पक्षाभासाः निराकृता भवन्ति । एवं सिद्धस्यासिद्धस्यापि साधनत्वेनाभिमतस्य स्वयं वादिना तदा साधयितुमनिष्टस्य उक्तमात्रस्य निराकृतस्य च विपर्ययेण साध्यः तेनैव स्वरूपेणाभिमतो वादिन इष्टोऽनिराकृतः पक्ष इति पक्षलक्षणमनवद्यं दर्शितं भवति ।

त्रिरूपलिङ्गाख्यानं परार्थानुमानमित्युक्तम् । तत्र त्रयाणां रूपाणामेकस्यापि रूपस्यानुक्तौ साधनाभासः; उक्तावपि असिद्धौ संदेहे वा । प्रतिपाद्यप्रतिपादकयोरेकस्य रूपस्य धर्मिसंबन्धस्यासिद्धौ संदेहे वाऽसिद्धो हेत्वाभासः । यथाऽनित्यः शब्द इति साध्ये चाक्षुषत्वमुभयासिद्धम् । चेतनास्तरव इति साध्ये सर्वत्वगपहरणे मरणं प्रतिवाद्यसिद्धं विज्ञानेन्द्रियायुर्निरोधलक्षणस्य मरणस्यानेनाभ्युपगमात्तस्य च तरुष्वसंभवात् । अचेतनाः सुखादय इति साध्ये उत्पत्तिमत्त्वमनित्यत्वं वा सांख्यस्य स्वयं वादिनोऽसिद्धम् । तथा स्वयं तदाश्रयणस्य वा संदेहेऽसिद्धः । यथा बाष्पादिभावेन संदिह्यमानो भूतसंघातोऽग्निसिद्धावुपदिश्यमानः संदिग्धासिद्धः । यथेह निकुञ्जे मयूरः केकायितादिति तदापातदेशविभ्रमे । धर्म्यसिद्धावपि असिद्धो यथा सर्वगत आत्मेति साध्ये सर्वत्रोपलभमानगुणत्वम् । तथैकस्य रूपस्यासपक्षेऽसत्त्वस्यासिद्धावनैकान्तिको हेत्वाभासः । यथा शब्दस्यानित्यत्वादिके धर्मे साध्ये प्रमेयत्वादिको धर्मः सपक्षविपक्षयोः सर्वत्रैकदेशे वा वर्तमानः । तथाऽस्यैव रूपस्य संदेहेऽप्यनैकान्तिक एव यथाऽसर्वज्ञः कश्चिद्विवक्षितः पुरुषो रागादिमान्वेति साध्ये वक्तृत्वादिको धर्मः संदिग्धविपक्षव्यावृत्तिकः । सर्वज्ञो वक्ता नोपलभ्यते इत्येवंप्रकारस्यानुपलम्भस्यादृश्यात्मविषयत्वेन संदेहहेतुत्वात् । ततोऽसर्वज्ञविपर्ययाद्वक्तृत्वादेर्व्यावृत्तिः संदिग्धा । वक्तृत्वसर्वज्ञत्वयोर्विरोधाभावाच्च । यः सर्वज्ञः स वक्ता न भवतीत्यदर्शनेऽपि व्यतिरेको न सिध्यति । संदेहात् । द्विविधो हि पदार्थानां विरोधः । अविकलकारणस्य भवतोऽन्यभावेऽभावाद्विरोधगतिः शीतोष्णस्पर्शवत्; परस्परपरिहार-

स्थितलक्षणतया वा भावाभाववत् । स च द्विविधोऽपि विरोधो वक्तृत्वसर्वज्ञत्वयोर्न संभवति । न चाविरुद्धविधेरनुपलब्धावपि अभावगतिः । रागादीनां वचनादेश्च कार्यकारणभावासिद्धेः । अर्थान्तरस्य वाऽकारणस्य निवृत्तौ न वचनादेर्निवृत्तिरिति संदिग्धव्यतिरेकोऽनैकान्तिको वचनादिः ।

द्वयो रूपयोर्विपर्ययसिद्धौ विरुद्धः । कयोर्द्वयोः ? सपक्षे सत्त्वस्यासपक्षे चासत्त्वस्य । यथा कृतकत्वं प्रयत्नानन्तरीयकत्वं च नित्यत्वे साध्ये विरुद्धो हेत्वाभासः । अनयोः सपक्षेऽसत्त्वमसपक्षे च सत्त्वमिति विपर्ययसिद्धिः । एतौ च साध्यविपर्ययसाधनाद्विरुद्धौ ।

ननु च तृतीयोऽपीष्टविघातकृद्विरुद्धः । यथा परार्थाश्चक्षुरादयः संघातत्वाच्छयनासनाद्यङ्गवदिति, तदिष्टासंहतपारार्थ्यविपर्ययसाधनाद्विरुद्धः । स इह कस्मान्नोक्तः ? अनयोरेवान्तर्भावात्, न ह्ययमाभ्यां साध्यविपर्ययसाधनत्वेन भिद्यते । न हीष्टोक्तयोः साध्यत्वेन कश्चिद्विशेष इति द्वयो रूपयोरेकस्यासिद्धावपरस्य च संदेहेऽनैकान्तिकः । यथा वीतरागः कश्चित् सर्वज्ञो वा वक्तृत्वादिति । व्यतिरेकोऽत्रासिद्धः; संदिग्धोऽन्वयः । सर्वज्ञवीतरागयोर्विप्रकर्षाद्वचनादेस्तत्र सत्त्वमसत्त्वं वा संदिग्धम् ।

अनयोरेव द्वयो रूपयोः संदेहेऽनैकान्तिकः । [यथा] सात्मकं जीवच्छरीरं प्राणादिमत्त्वादिति । न हि सात्मकनिरात्मकाभ्यामन्यो राशिरस्ति यत्र प्राणादिर्वर्तते; आत्मनो वृत्तिव्यवच्छेदाभ्यां सर्वसंग्रहात् । नाप्यनयोरेकत्र वृत्तिनिश्चयः; सात्मकत्वेन निरात्मकत्वेन वा प्रसिद्धे प्राणादेरसिद्धेः । तस्माज्जीवच्छरीरसंबन्धी प्राणादिः सात्मकादनात्मकाच्च सर्वस्माद्व्यावृत्तत्वेनासिद्धेः ताभ्यां न व्यतिरिच्यते । न [च] तत्रान्वेति; एकात्मन्याप्यसिद्धेः । नापि सात्मकान्निरात्मकाच्च तस्यान्वयव्यतिरेकयोरभावनिश्चयः एकाभावनिश्चयस्यापरभाव[निश्चय] नान्तरीयकत्वात्; अन्वयव्यतिरेकयोरन्योन्यव्यवच्छेदरूपत्वात् । अत एवान्वयव्यतिरेकयोः संदेहादनैकान्तिकः; साध्येतरयोरतो निश्चयाभावात् ।

एवं त्रयाणां रूपाणामेकैकस्य द्वयोर्द्वयोर्वा रूपयोरसिद्धौ संदेहे च यथायोगमसिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासाः ।

विरुद्धाव्यभिचार्यपि संशयहेतुरुक्तः। स इह (कस्मात्) नोक्तः। अनुमानविषयेऽसंभवात्। न हि संभवोऽस्ति कार्यस्वभावयोरुक्तलक्षणयोरनुपलम्भस्य च विरुद्धतायाः। न चान्योऽव्यभिचारी। तस्मादवस्तुदर्शनबलप्रवृत्तमागमाश्रयमनुमानं आश्रित्य तदर्थविचारेषु विरुद्धाव्यभिचारी साधनदोष उक्तः; शास्त्रकाराणामर्थेषु भ्रान्त्या विपरीतस्य स्वभावस्योपसंहारसंभवात्। न ह्यस्य संभवो यथावस्थितवस्तुस्थितिषु आत्मकार्यानुपलम्भेषु। तत्रोदाहरणं यत्सर्वदेशावस्थितैः स्वसंबन्धिभिः संबध्यते तत्सर्वगतं यथाकाशम्। अभिसंबध्यते च सर्वदेशावस्थितैः स्वसंबन्धिभिर्युगपत्सामान्यमिति। तत्संबन्धिस्वभावमात्रानुबन्धिनी तद्देशसंनिहितस्वभावता। न हि यो यत्र नास्ति स तद्देशमात्मना व्याप्नोतीति स्वभावहेतुप्रयोगः। द्वितीयोऽपि प्रयोगः — यदुपलब्धिलक्षणप्राप्तं सन्नोपलभ्यते न तत्तत्रास्ति। तद्यथा क्वचिदविद्यमानो घटः। नोपलभ्यते चोपलब्धिलक्षणप्राप्तं सामान्यं व्यक्त्यन्तरालेष्विति। अयमनुपलम्भप्रयोगः स्वभावश्च परस्परविरुद्धार्थसाधनादेकत्र संशयं जनयतः।

त्रिरूपो हेतुरुक्तः। तावतैवार्थप्रतीतिरिति न पृथग्दृष्टान्तो नाम साधनावयवः कश्चित्। तेन नास्य लक्षणं पृथगुच्यते गतार्थत्वात्। हेतोः सपक्ष एव सत्त्वमसपक्षाच्च सर्वतो व्यावृत्ती रूपमुक्तमभेदेन, पुनर्विशेषेण कार्यस्वभावयोर्जन्मतन्मात्रानुबन्धौ दर्शनीयावुक्तौ। तच्च दर्शयता यत्र धूमस्तत्राग्निः असत्यग्नौ न क्वचिद्धूमो यथा महानसेतरयोः। यत्र कृतकत्वं तत्रानित्यत्वं अनित्यत्वाभावे कृतकत्वासंभवो यथा घटाकाशयोरिति दर्शनीयम्। न ह्यन्यथा सपक्षविपक्षयोः सदसत्त्वे यथोक्तप्रकारे शक्ये दर्शयितुम्। तत्कार्यतानियमः कार्यलिङ्गस्य स्वभावलिङ्गस्य च स्वभावेन व्याप्तिः। अस्मिंश्चार्थे दर्शिते दर्शित एव दृष्टान्तो भवति; एतावन्मात्ररूपत्वात्तस्य।

एतेनैव दृष्टान्तदोषा अपि निरस्ता भवन्ति—यथा नित्यः शब्दोऽमूर्तत्वात् कर्मवत् परमाणुवत् घटवदिति साध्यसाधनधर्मोभयविकलाः। तथा संदिग्धसाध्यधर्मादयश्च यथा रागादिमानयं वचनात् रथ्यापुरुषवत्। मरणधर्माऽयं पुरुषो रागादिमत्त्वात् रथ्यापुरुषवत्। असर्वज्ञोऽयं रागादिमत्त्वात् रथ्यापुरुषवदिति। अन-

न्वयोऽप्रदर्शितान्वयश्च यथा यो वक्ता स रागादिमान् इष्टपुरुषवत् ; अनित्यः शब्दः कृतकत्वात् घटवादिति। तथा विपरीतान्वयो यदनित्यं तत्कृतकमिति साधर्म्येण। वैधर्म्येणापि परमाणुवत्कर्मवदाकाशवदिति साध्याद्यव्यतिरेकिणः। तथा संदिग्धसाध्यव्यतिरेकादयो यथा असर्वज्ञाः कपिलादयोऽनाप्ता वा अविद्यमानसर्वज्ञताप्ततालिङ्गभूतप्रमाणातिशयशासनत्वादिति। अत्र वैधर्म्योदाहरणं यः सर्वज्ञ आप्तो वा स ज्योतिर्ज्ञानादिकमुपदिष्टवान् तद्यथा ऋषभवर्धमानादिरिति। तत्रासर्वज्ञतानाप्ततयोः साध्यधर्मयोः संदिग्धो व्यतिरेकः। संदिग्धसाधनव्यतिरेको यथा न त्रयीविदा ब्राह्मणेन ग्राह्यवचनः कश्चिद्विवक्षितः पुरुषो रागादिमत्त्वादिति। अत्र वैधर्म्योदाहरणं ये ग्राह्यवचना न ते रागादिमन्तः तद्यथा गौतमादयो धर्मशास्त्राणां प्रणेतार इति। गौतमादिभ्यो रागादिमत्त्वस्य साधनधर्मस्य व्यावृत्तिः संदिग्धा। संदिग्धोभयव्यतिरेको यथा अवीतरागाः कपिलादयः परिग्रहाग्रहयोगादिति। अत्र वैधर्म्योदाहरणं यो वीतरागो न तस्य परिग्रहाग्रहो यथा ऋषभादेरिति। ऋषभादेरवीतरागत्वपरिग्रहाग्रहयोगयोः साध्यसाधनधर्मयोः संदिग्धो व्यतिरेकः। अव्यतिरेको यथा अवीतरागो वक्तृत्वात्। वैधर्म्योदाहरणं यत्रावीतरागत्वं नास्ति न स वक्ता यथोपलखण्ड इति। यद्यप्युपलखण्डादुभयं व्यावृत्तम् तथापि सर्वो वीतरागो न वक्तेति व्याप्त्या व्यतिरेकासिद्धेरव्यतिरेकः। अप्रदर्शितव्यतिरेको यथा अनित्यः शब्दः कृतकत्वादाकाशवदिति। विपरीतव्यतिरेको यथा यदकृतकं तन्नित्यं भवतीति।

न ह्येभिर्दृष्टान्ताभासैर्हेतोः सामान्यलक्षणं, सपक्ष एव सत्त्वं विपक्षे च सर्वत्रासत्त्वमेव, निश्चयेन शक्यं दर्शयितुं विशेषलक्षणं वा। तदर्थापत्त्यैषां निरासो वेदितव्यः।

दूषणा न्यूनताद्युक्तिः। ये पूर्वं न्यूनतादयः साधनदोषा उक्तास्तेषामुद्भावनं दूषणम्, तेन परेष्टार्थसिद्धिप्रतिबन्धात्। दूषणाभासास्तु जातयः ; अभूतदोषोद्भावनानि जात्युत्तराणीति।

इति तृतीयः परिच्छेदः।

न्यायबिन्दुः समाप्तः॥